## हमारी निज प्रकाशित छात्रोपयोगी पुस्तकें—

# वाग्भटालङ्कार
## व्याख्याद्वयोपेतः

इसके उपर हमने कविभूषण श्रीप्रेमनिधि शास्त्रि वेदाचार्य से 'सौभाग्य' नामक सरल संस्कृत व्याख्या तथा 'विमला' नामक हिन्दी व्याख्या विद्यार्थियों के अत्यन्त उपयोगी २ टीकायें करवाई हैं। टीकायें इतनी सरल हैं कि विद्यार्थी विना अध्यापक के ही पुस्तक को लगा सकते हैं-हिन्दी टीका अर्थ को समझाने के लिये इतनी उपयोगी बनी है कि देखते ही बनता है पुस्तक बढ़िया कागज पर बढ़िया निर्णयसागरी टाइप में छपी है-और साथ में प्रश्नावली भी दे दी है-१८८ पृष्ट की पुस्तक का दाम केवल ॥।) रखा है जो सब संस्करणों से सस्ता है, इस पर भी विद्यार्थियों को कमीशन काट कर ॥=)। में ही मिलेगी-हमारा हरएक विद्यार्थी से सप्रेम अनुरोध है कि अगर परीक्षा में पास होना चाहते हैं तो इस संस्करण को ही खरीदें—

## प्रतिमानाटक—

महाकवि श्री भास प्रणीत--व्याकरणाचार्य पं० श्रीधरानंद जी शास्त्री विरचित छात्रोपयोगी अत्यन्त सरल संस्कृत तथा हिन्दी दो टीकाओं सहित—

३ वृत्तरत्नाकर—पं॰ रामचन्द्र शास्त्रिकृत "बालबोधनी" नामक सरल संस्कृत व्याख्या सहित। टीका अत्यन्त सरल है ताकि छात्रगण इसे अपने आप ही अच्छी तरह लगा सकें। मूल्य केवल ॥।) परन्तु विद्यार्थियों से ॥=)

४ प्राज्ञप्रश्नोत्तरमाला—लेखक पं० चक्रधर 'हंस' शास्त्री—सब प्रश्नपत्रों के उत्तर साथ ही बड़ी उपयोगिता के साथ दिये हैं-विद्यार्थियों के बड़े काम की चीज है मूल्य ॥।=) विद्यार्थियों से ॥।)

# सूचना

अयि काव्यशास्त्ररसिकाः सहृदया महानुभावाः! दृश्यश्रव्यादिकाव्येषु मल्लिनाथप्रभृतिभिर्दण्डान्वयरीत्या कृताः प्रभूता व्याख्याः समुपलभ्यन्ते. ताभिर्यद्यपि विद्यार्थिनां परीक्षोपयोगित्वं तु सम्भवति तथापि व्युत्पत्त्यास्तु लेशोऽपि तेषु न जायत इति प्रत्यक्षमेव दृश्यते. अत एव प्राचीनशैलीशीला विद्वांसः स्वसुतानां शिष्याणां च बोधाय खण्डान्वयप्रणाल्यैव तान् सम्प्रत्यपि पाठयन्ति इति सम्प्रधार्य श्रीयुतपरमपूज्यगुरुभिः प्राच्यविद्यालयमुख्याध्यापकैर्महामहोपाध्यायपण्डितशिवदत्तैराज्ञप्तेन मया यथा परीक्षोपयोगित्वं व्युत्पत्तिश्चेत्युभयं सम्भवेच्छात्राणां तादृशी "पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना। आक्षेपोऽथ समाधानं व्याख्यानं तु षड्विधम्" इति प्रायः समस्तैरेवाङ्गैः समलङ्कृता सरस्वतीदधिमथीनाम्नी काश्मीरिकश्रीहर्षदेवप्रणीतनागानन्दीयटीका व्यरचि, तत्र पदच्छेदे शब्दानन्तरं (वि.) (विशे.) इत्यादिना 'विशेषणं' (प.) इत्यनेन 'पदं' च ज्ञेयम्।

अथेदं नागानन्दं दृश्यश्रव्यादिषु किंस्वरूपमिति किञ्चिदुच्यते—पूर्वं तावत्काव्यं दृश्यश्रव्यत्वभेदेन द्विविधम्, तत्राभिनेयाद्दृश्यमित्युच्यते तदेव रूपारोपाद्रूपकमुच्यते तदुक्तं "रूपारोपात्तु रूपकमिति"। तस्य रूपकस्य च नाटकादयो दश भेदाः, तेष्विदं नागानन्दं नाटकम्। तल्लक्षणं यथा दर्पणे, "नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम्। विलासद्र्ध्यादिगुणवद् युक्तं नानाविभूतिभिः। सुखदुःखसमुद्भूतिनानारसनिरन्तरम्। पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः। प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्। दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः। एक एव भवेदङ्गी शृङ्गारो वीर एव वा। अङ्गमन्ये रसाः सर्वे कार्ये निर्वहणेऽद्भुतम्॥ चत्वारः पञ्च वा मुख्याः कार्ये व्यापृतपूरुषाः। गोपुच्छाग्रसमाग्रं तु बन्धनं तस्य कीर्त्तितम्" इति। तत्र विद्याधरवंशोद्भवो दिव्योऽत्र नायको जीमूतवाहनः, दयावीरः प्रधानो रसः, शान्ताद्भुतशृङ्गारादयस्त्वङ्गानि।

अथ नागानन्दीयपञ्चाङ्कानां प्रत्येकं सङ्क्षेपतः कथा लिख्यन्ते।

## तत्र प्रथमेऽङ्के

सूत्रधारसूचनानन्तरं पित्रोः शुश्रूषारसिकस्य तत्समीपं गन्तु-

मनसः सविदूषकस्य जीमूतवाहनस्य मलयाचलोपरि वर्त्तमा
गौरीमन्दिरे विद्याधरचक्रवर्त्ती मे पतिर्भूयादिति सरसं गायन्त
मलयवतीं समवलोक्य प्रारब्धे परस्परं सम्भाषणे, समागते
शाण्डिल्यतापसेन साकं मलयवत्यां गतायां तद्विरहासक्तेन नायके
मध्यान्हवर्णनम् ।

## द्वितीयेऽङ्के

चतुरिकया नाम चेट्या पञ्चशरशरविद्धमलयवतीसन्तापशम
नाय सज्जीकृते चन्दनलतागृहे, तयैव चेट्या सह गतायां तत्र मलय
वत्यां, वार्त्तालापे तन्नायकस्मरणे, स्वप्नानुभूतनायिकादर्शनानुसा
जीमूतवाहनेऽपि तत्रैवायते, निजचित्ताल्हादाय चित्रलिखिताय
नायिकायां, तस्या एव स्वरूपातिशयवर्णनम्, अन्यनायिकाभ्रान्त्य
मलयवत्या ईर्ष्यावर्णनं च, तस्मिन्नेव काले मलयवत्या वरहेतोर्जीमू
तवाहनं द्रष्टुं समागते मित्रावसौ, प्रतिषिद्धेऽन्यधिया जीमूतवाह
नेन, याते च मित्रावसौ, मलयवत्याः पाशग्रहणे चेट्या कृते कोला
हले नायकेन चित्रगतां नायिकां प्रदर्श्य मलयवत्या आश्वासः,
तदुभयोः पाणिग्रहणाय गमनं च वर्ण्यते ।

## तृतीयेऽङ्के

विवाहानन्तरं सहर्षं क्रीडत्सु विटचेटचेट्यादिषु मद्यमत्तेषु,
कुसुमाकरोद्यानं गतेषु नायकादिषु, नायिकया सह प्रेमालापं कुर्वति
नायके, विदूषकेण सह हसन्त्यां च चेट्यां, मित्रावसोरागमनम्,
तदा गतायां स्वगृहं मलयवत्यां, मित्रावसोर्जीमूतवाहनपुरो मतङ्ग-
हतके क्रोधवर्णनम् ।

## चतुर्थेऽङ्के

समुद्रवेलां द्रष्टुं गतयोर्मित्रावसुजीमूतवाहनयोर्मलयसानुषु
नागास्थिसङ्घातानवलोक्य जीमूतवाहनस्य जिज्ञासायां, मित्राव-
सोस्तत्कारणमाकर्ण्य, कथमप्यहमेकनागरक्षार्थं गरुडाय स्वशरीरं
समर्पयेयमिति चिन्तयति नायके दीपप्रतिपदुत्सवानुरूपामन्त्रणा-
याऽऽह्वानार्थमागतेन प्रतीहारेण समं याते मित्रावसौ, स्वशरीर-
समर्पणं प्रतीक्षमाणे जीमूतवाहने, समागते गरुडाहारार्थं स्वजनन्या
सह शङ्खचूडे, जाते मिथो वार्त्तालापे, भगवन्तं गोकर्णं प्रणमितुं
गते शङ्खचूडे, तत्रैवोचितकाले कञ्चुकिना समाहृतं रक्तवस्त्रद्वयं परि-
धाय वध्यशिलायां विराजमानं जीमूतवाहनमादाय मलयोपरि
गरुडस्य गमनवर्णनम् ।

## पञ्चमेऽङ्के

जलनिधिवेलावलोकनार्थं गतो जीमूतवाहनः किं चिरयतीति विचिन्तयता महाराजविश्वावसुना जीमूतकेतुसमीपं प्रेषितेन नायकसमाचारार्थं प्रतीहारेण दुश्शकुनदुःखितेषु जीमूतकेत्वादिषु, पादपतितं रुधिरलिप्तं जीमूतवाहनचूडामणिं दृष्ट्वा विलपत्सु तेषु, गते च प्रतिहारे शङ्खचूडमायान्तमवलोक्य समाश्वासं गतेषु, मदर्थे केनापि विद्याधरेण शरीरं तार्क्ष्याय समर्पितमिति तन्मुखादाकर्ण्य प्रभूतं विलपत्सु, रुधिरधारानुगते शङ्खचूडे, तत्र भक्ष्यमाणस्यापि नायकस्य प्रसन्नमुखत्वमौदार्यं च विज्ञाय गरुडस्याश्चर्यवर्णनम्, प्राप्ते शङ्खचूडे शोचति नायके, मयाऽद्य नागस्थाने विद्याधरवंशतिलको महायशा जीमूतवाहनो भक्षित इति विचिन्तयति प्रायश्चित्ताय जिज्ञासमाने च गरुत्मति, समागतेषु साग्निकेषु पित्रादिषु, समुपदिष्टे जीमूतवाहनेन गरुडाय पापप्रतीकारे, नायकप्राणपरित्यागः, विलपत्सु च गाढं पित्रादिषु सज्जीकृतायां सर्वदाहार्थं चितायां, मलयवतीस्मृतया गौर्या प्रत्यक्षमागतया जीविते जीमूतवाहने वरप्रदानवर्णनम् ॥ इति ।

> मूढोऽप्यहं सत्कविसूक्तिमध्ये
>
> पूर्वत्र चेदायुषि वा कवीये ।
>
> तथापि सन्तः शिशुकं विलोक्य
>
> मच्चेष्टितं नो परिहासयन्तु ॥ १ ॥

यद्यस्मिन्निबन्धे ग्रन्थव्याख्यायां वा काचिन्न्यूनताऽशुद्धिर्वा स्यात्तर्हि "गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः । हसन्ति दुर्जनास्तत्र समादधति सज्जनाः" इति समवधार्य क्षम्यतां विद्वद्भिः। मया चेदं मुद्रणाय प्रकाशनाय च स्वपरमामित्रलालामोतीलालहस्ते समर्पितम् ॥

इत्यभ्यर्थयते
विद्वद्वरदासो
मौद्गल्यगोत्रोत्पन्नपण्डितेश्वरदाससूनुः
सुन्दरदासशर्म्मा शास्त्री

आषाढशुक्लद्वितीया संवत् १९७०

ओं श्रीगणेशाय नमः

# नागानन्दं नाटकम्

## सरस्वतीदाधिमथीनामधेयया टीकया समेतम्



## प्रथमोऽङ्कः

### नान्दी

ध्यानव्याजमुपेत्य चिन्तयसि कामुन्मील्य चक्षुः क्षणम्
पश्यानङ्गशरातुरं जनमिमं त्रातापि नो रक्षसि ।
मिथ्याकारुणिकोऽसि निर्घृणतरस्त्वत्तः स कोऽन्यः पुमान्
सेर्ष्यं मारवधूभिरित्यभिहितो बुद्धो जिनः पातु वः ॥ १ ॥

दाधिमथप्रेरितशेमुषीकः सरस्वतीप्राप्तवरप्रसादः ।
प्रणम्य वाणीमुभयेष्टनाम्नीं टीकां प्रथे सुन्दरदासशर्म्मा ॥ १ ॥

'नागेति' नागाना सर्पाणामानन्दो यत्र तत्, शङ्खचूडनामनागस्य प्राण-रक्षार्थं जीमूतवाहनेन स्वशरीरे समर्पिते प्राप्तघृणेन गरुत्मताऽमृतवृष्टिं कृतवता पूर्वमृतनागाना पुनर्जीवनमत्र वर्ण्यत इत्यर्थः ।

अङ्क इति । अङ्कयति लक्षयति गमयतीत्यर्थः 'रसादिकमिति' अकिलक्षणे, पचाद्यच् । तल्लक्षणम् यथा दशरूपके 'यदा तु सरसं वस्तु मूलादेव प्रवर्त्तते । आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः' इति ।

नान्दीति । नन्दयति स्वष्टदेवतां ( नटगणो ) यत्र सा तल्लक्षणं यथा साहित्यदर्पणे 'आशीर्वचनसंयुक्ता स्तुतिर्यस्मात्प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता' । इति । 'पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत' इति वचनादत्राष्टपदात्मिका नान्दी ।

ध्यानव्याजमिति । ( पदच्छेदः ) ध्यानव्याजम् ( २।१ ल्यबन्त कर्म ) उपेत्य ( ल्यबन्तमव्ययम् ) चिन्तयसि ( क्रिया ) काम् ( २।१ कर्म ) उन्मील्य (ल्यबन्तम् ) चक्षुः ( २।१ ल्यबन्तकर्म ) क्षणम् ( क्रियाविशेषणम् ) पश्य ( क्रिया ) अनङ्गशरातुरम् ( २।१ कर्मविशेषणम् ) जनम् ( २।१ कर्म ) इमम् ( २।१ कर्मवि० ) त्राता ( १।१ कर्ता ) अपि ( अव्ययम् ) नो ( अव्ययम् ) रक्षसि ( क्रिया ) मिथ्या ( अव्ययम् ) कारुणिकः ( १।१ कर्त्ता ) असि ( क्रिया ) निर्घृणतरः ( १।१ कर्तृविशेषणम् ) त्वत्तः ( तसिलन्तम् ) सः ( १।१ कर्तृवि. )

कः ( १।१ कर्तृवि. ) अन्यः ( १।१ कर्तृवि. ) पुमान् ( १।१ कर्ता ) सेर्ष्यम् ( क्रियाविशेषणम् ) मारवधूभिः ( ३।३ निष्ठान्तकर्तृपदम् ) इति ( अव्ययम् ) अभिहितः ( १।१ निष्ठान्तं कर्तृवे ) बुद्धः ( १।१ कर्तृवि. ) जिनः ( १।१ कर्ता ) पातु ( क्रिया ) वः ( २।३ कर्म )।

खण्डान्वयः—

जिनो वः पातु, कीदृशः ? अभिहितः, काभिः ?, मारवधूभिः, किमभिहितः ? 'कां चिन्तयसि, किं कृत्वा ? ध्यानव्याजमुपेत्य' इमं जनं पश्य, कीदृशम् ? अनङ्गशरातुरम्। किं कृत्वा ? क्षणं चक्षुः उन्मील्य, त्राताऽपि नो रक्षसि, मिथ्या कारुणिकोऽसि, त्वत्तोऽन्यः, स कः पुमान् निर्घृणतरः, इत्यभिहितः, कथं ? सेर्ष्यम्, पुनःकीदृशः ? बुद्धः।

सखण्डान्वया व्याख्या।

विघ्नविनाशार्थं मानसिकमङ्गलस्य कर्तव्यत्वेऽपि शिष्यशिक्षार्थं प्रकटयति, ध्यानव्याजमिति। ध्यानव्याजं ध्यानं चिन्तनमेव व्याजः कपटं तद् उपेत्य प्राप्य कां प्रिया चिन्तयसि ध्यायसि ? क्षणं क्षणमात्रं चक्षुः नेत्रम् उन्मील्य उद्घाट्य अनङ्गशरातुरम् अनङ्गस्य कामस्य शरैः बाणैः आतुरं पीडितम् इमं जनं मामित्यर्थः पश्य अवलोकय, त्राता रक्षिताऽपि नो रक्षसि पालयसि कामबाणपीडात इति भावः, मिथ्या असत्यमेव कारुणिकः करुणा सञ्जाताऽस्य स 'ठक्प्रत्ययः' तादृशो दयालुरसि त्वत्तः जिनाद् अन्यो भिन्नः स कः पुमान् पुरुषः निर्घृणतरः अतिशयेन निर्घृणः दयारहितः 'कारुण्यं करुणा घृणा' इति दयानामस्वमरः, अस्तीति शेषः। न कोपीत्यर्थः। इत्युक्तप्रकारेण मारवधूभिः कामप्रधानयुवतिभिः 'मदनो मन्मथो मारः' इति कामनामस्वमरः, सेर्ष्यम् ईर्ष्यया सह यथा स्यात्तथा अभिहितः कथितः बुद्धो बुद्धं ज्ञानं तदस्यास्तीति बुद्धः 'अर्श आदिभ्योऽच्' ज्ञानीत्यर्थः जिनो वो युष्मान् सभ्यान् पातु रक्षतु ॥ १ ॥ अत्र पद्ये शार्दूलविक्रीडितं छन्दः 'सूर्याश्वैर्मसजस्ततः सगुरवः शार्दूलविक्रीडितम्' इति लक्षणात्। सेर्ष्यमभिहितोऽपि न चलित इति विशेषोक्तिर्व्यङ्ग्या 'सति हेतौ फलाभावो विशेषोक्तिरिति लक्षणम्'। अत्र कारकदीपकमपि 'अथ कारकमेकं स्यादनेकासु क्रियासु चेत्' इति लक्षणात्।

अपिच।

कामेनाकृष्य चापं हतपटुपटहावल्गिभिर्मारवीरै-
र्भ्रूभङ्गोत्कम्पजृम्भास्मितचलितदृशा दिव्यनारीजनेन।
सिद्धैः प्रह्वोत्तमाङ्गैः पुलकितवपुषा विस्मयाद् वासवेन
ध्यायन् बोधेरवाप्तो न चलित इति वः पातु दृष्टो मुनीन्द्रः ॥२॥

पदच्छेदः ।

कामेनेति । कामेन ( ३।१ निष्ठान्तं कर्तृ प० ) आकृष्य ( ल्यबन्तम् ) चापम् (२।१ ल्यबन्त कर्म ) हतपटुपटहावलिगभिः ( ३।३ निष्ठान्तं कर्तृ वि० ) मारवीरैः ( ३ । ३ निष्ठान्तं कर्तृप. ) भ्रूभङ्गोत्कम्पजृम्भास्मितचलितदृशा ( ३ । १ निष्ठान्तं कर्तृवि. ) दिव्यनारीजनेन ( ३ । १ निष्ठान्तं कर्तृप. ) सिद्धैः ( ३ । ३ निष्ठान्तं कर्तृप. ) प्रह्वोत्तमाङ्गैः ( ३ । ३ निष्ठान्तं कर्तृवि. ) पुलकितवपुषा ( ३ । १ निष्ठान्तं कर्तृवि. ) विस्मयात् ( ५ । १ ) वासवेन ( ३ । १ निष्ठान्तं कर्तृप. ) ध्यायन् ( १ । १ कर्तृवि. ) बोधेः ( ३ । ३ निष्ठान्तं कर्तृप० ) अवाप्तः ( १ । १ निष्ठान्त कर्तृवि० ) न ( अव्ययम् ) चलितः ( १ । १ कर्तृवि. ) इति ( अव्ययम् ) व ( २ । ३ कर्म ) पातु ( क्रिया ) दृष्टः ( १।१ निष्ठान्तं कर्तृवि. ) मुनीन्द्र ( १ । १ कर्ता ) ॥

खण्डान्वयः

मुनीन्द्रो वः पातु, कीदृशः कामेन दृष्टः, किं कृत्वा ? चापम् आकृष्य, पुनः कीदृश ? मारवीरैर्दृष्टः, कीदृशैः ? हतपटुपटहावलिगभिः, पुन. कीदृशः ? दिव्यनारीजनेन दृष्टः, कीदृशेन ? भ्रूभङ्गोत्कम्पजृम्भास्मितचलितदृशा, पुनः कीदृशः ? सिद्धैः दृष्टः, कीदृशैः ? प्रह्वोत्तमाङ्गैः, पुनः कीदृशः ? न चलित इति विस्मयाद् वासवेन दृष्टः, कीदृशेन ? पुलकितवपुषा, पुनः कीदृशः ? ध्यायन्, पुनः कीदृशः ? अवाप्त , कः ? बोधेः ॥

व्याख्याः—

अष्टपदात्मिकां नान्दीं पूरयितुं पुनराशीर्वादात्मकमङ्गलस्वरूपेण जिनमेव स्तौति कामेनेति । कामेन स्मरेण 'कामः पञ्चशर. स्मरः' इत्यमरः, चापं धनुः आकृष्य कर्णपर्यन्तं तदाकर्षणं कृत्वा, "दृष्ट इति क्रियायाः सर्वतृतीयान्तपदैः सम्बन्धः" हतेति, हताः दण्डेन ताडिताः पटव. अमन्दा उच्चैःशब्दायमाना इत्यर्थः, 'दक्षामन्दागदेषु च, पटुर्द्वौ, इत्यमरः' पटहा वाद्यविशेषा, यैस्तथोक्ता आवल्गन्ति उद्धतं चरन्ति तच्छीलास्तादृशैः 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः । मारवीरैः मार काम', 'मदनो मन्मथो मार इति कामनामस्वमरः' तस्य वीरैः शूरैः चन्दनचन्द्रभ्रमरदक्षिणवातादिभिरित्यर्थः, भ्रूभङ्गेति, भ्रुवोर्भङ्गेन यदुत्कम्पनं तेन, जृम्भया आलस्येन यो वदनविकासस्तेन स्मितेन ईषद्धसनेन च चलिते चञ्चलीभूते दृशौ नयने यस्य तादृशेन दिव्यनारीजनेन दिवि भवो दिव्य. ( यत् ) यो नारीजनः कान्तासमूहस्तेन स्वर्गस्त्रीसमाजेनेत्यर्थः प्रह्वोत्तमाङ्गैः प्रह्वं नम्रीभूतम् उत्तमाङ्गं शिरो येषां तादृशैः "उत्तमाङ्गं शिर· शीर्षमित्यमर ' सिद्धैः देवयोनिविशेषैः, न चलितः समाधित· अच्युत इति विस्मयाद् आश्चर्यात् पुलकितवपुषा पुलकितं सञ्जातपुलकं रोमाञ्चितं वपु शरीरं यस्य तादृशेन वासवेन इन्द्रेण 'वासवो वृत्रहा वृषा'

इत्यमरः। दृष्टोऽवलोकित', ध्यायन् निमीलितनयन स्वेष्टं चिन्तयन् बोधे. 'बोधनं बोधो ज्ञानं' ज्ञानैरित्यर्थः। अवाप्तः प्राप्त. ज्ञानसंलग्नचित्त इत्यर्थ', एतादृशो मुनीन्द्र शाक्यमुनिः 'मुनीन्द्रः श्रीघनः शास्ते' ति तन्नामस्वमर'। वो युष्मान् सामाजिकान् पातु रक्षतु 'पा रक्षणे लोट्' ॥ २ ॥

अत्र स्रग्धरा वृत्तम् 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्त्तितेयम्' इति लक्षणात्" विशेषोक्तिरलङ्कृतिः। "सति हेतौ फलाभावो विशेषोक्तिरिति द्विधा" इति लक्षणात्।

## नान्द्यन्ते—

नान्द्यन्ते 'सप्तम्यन्तम्' नान्द्या मङ्गलविशेषस्यान्तेऽवसाने सूत्रधारो नटविशेषः तल्लक्षणं यथा "नाट्योपकरणादीनि सूत्रमित्यभिधीयते, सूत्रं धारयतीत्यर्थे सूत्रधारो मतो बुधैरिति"।

नान्द्यन्ते सूत्रधार इदं प्रयोजितवान्, इति कवेरभिप्राय: सूचित', इति-साहित्यदर्पणम् ॥

**सूत्रधारः अलमतिविस्तरेण।**

किं सूत्रधारः "प्रयोजितवानित्याह" अलम् (अव्ययम्) अतिविस्तरेण (तृतीयान्तम्) अतिविस्तरेण बहुकोलाहलेन अलम्, कोलाहलो मा कर्त्तव्य इत्यर्थः (इति सभ्यानाह)

**अद्याहमिन्द्रोत्सवे सबहुमानमाहूय नानादिग्देशागतेन राज-श्रीहर्षदेवस्य पादपद्मोपजीविना राजसमूहेनोक्तः।**

अद्य (अव्ययम्) अहम् (१।१ कर्मप) इन्द्रोत्सवे (७।१ अधिकरणम्) सबहुमानम् (क्रियावि.) आहूय (ल्यबन्तम्) नानादिग्देशागतेन (३।१ कर्तृव.) राजश्रीहर्षदेवस्य (६।१) पादपद्मोपजीविना (३।१ कर्तृवि.) राज-समूहेन (३।१ कर्तृपदम्) उक्त' (निष्ठान्तक्रिया) अहम् उक्त, केन? राज-समूहेन, कुत्र? इन्द्रोत्सवे, कदा? अद्य, किंकृत्वा? सबहुमानम् आहूय, कीदृशेन राजसमूहेन? नानादिग्देशागतेन, पुनः कीदृशेन? पादपद्मोपजीविना, कस्य? राजश्रीहर्षदेवस्य, इति खण्डान्वयः ॥

व्याख्या

"अद्येति" अद्यास्मिन् दिने इन्द्रोत्सवे इन्द्रस्य देवराजस्य उत्सवे महर्षि मङ्गलावसरे "मह उद्धव उत्सव इत्यमरः" सबहुमानं बहुमानेन सह यथास्यात्तथा आहूय आकार्य "नानेति" नाना अनेकविधा या दिश प्राच्यादय देशाश्च तेभ्य आगतेन, राजेति, राजा चासौ श्रीहर्षदेवस्तस्य (कर्मधारयसमास) पादेति, पादपद्माभ्या चरणकमलाभ्याम् उपजीवति तच्छीलः तेन श्रीहर्षदेववशीभूतेनेत्यर्थ (६) राजसमूहेन नृपतिवर्गेण उक्तः कथित.।

**यत्तदस्मत्स्वामिना श्रीहर्षदेवेनापूर्ववस्तुरचनालङ्कृतं विद्याधरचक्रवर्त्तिप्रतिबद्धं नागानन्दं नाम नाटकं कृतमस्माभिः श्रोत्रपरम्परया श्रुतं न च प्रयोगतो दृष्टम् ।**

पदच्छेदः

यत् ( १ । १ ) तत् ( १ । १ कर्मविशे. ) अस्मत्स्वामिना ( ३ । १ कर्तृवि. ) श्रीहर्षदेवेन ( ३ । १ कर्तृप. ) अपूर्ववस्तुरचनालङ्कृतम् ( १ । १ कर्मवि. ) विद्याधरचक्रवर्त्तिप्रतिबद्धम् ( १ । १ कर्मवि. ) नागानन्दम् ( १ । १ कर्मवि. ) नाम ( १ । १ ) नाटकम् ( १ । १ कर्म ) कृतम् ( निष्ठान्तक्रिया ) अस्माभिः (३।१ कर्तृप. ) श्रोत्रपरम्परया ( ३।१ करणम् ) श्रुतम् ( निष्ठा. ) न (अव्ययम्) च ( अव्ययम् ) प्रयोगत. ( तसिलन्तम् ) दृष्टम् ( निष्ठा. ) ।

खण्डान्वयः ।

'यत् श्रीहर्षदेवेन नाटकं कृतम्', कीदृशेन श्रीहर्षदेवेन ? अस्मत्स्वामिना, कीदृशं नाटकम् ? 'तत्', पुनः कीदृशम् ? अपूर्ववस्तुरचनालंकृतम्, पुनः कीदृशं ? 'विद्याधरचक्रवर्तिप्रतिबद्धम्' किंनाम, नागानन्दं नाम । अस्माभिः श्रुतम्, कया ? श्रोत्रपरम्परया, न च दृष्टम्, कुतः ? प्रयोगतः । इति खण्डा० ।

व्याख्या ।

'किमुक्तो राजसमूहेनेत्याह' 'यद् अस्मत्स्वामिना' अस्मदधीश्वरेण श्रीहर्षदेवेन तदाख्यनृपतिना तत् प्रसिद्धं 'प्रक्रान्तप्रसिद्धानुभूतेष्वर्थेषु प्रसिद्धार्थेऽत्र तच्छब्दः' अपूर्वेति, अपूर्वं न विद्यते पूर्वं यस्मात्तादृशम् अद्भुतमित्यर्थः यद् वस्तु वृत्तं कथेत्यर्थ । तस्य रचनया वर्णनेन अलङ्कृतं भूषितम्, विद्येति । विद्याधरेषु यश्चक्रवर्ती अधीश्वरो जीमूतवाहनस्तेन प्रतिबद्धं रचितं तत्कथया समेतमित्यर्थः । एतादृशं नागानन्दं नाम नाटकं कृतं सम्पादितम्, अस्माभिर्नृपतिसमूहैः श्रोत्रपरम्परया कर्णक्रमागतया श्रुतम् आकर्णितं न च प्रयोगतो नाट्यरीत्या दृष्टं नेत्रविषयीकृतम् ।

**तत्तस्यैव राज्ञः सकलजनहृदयाह्लादिनो बहुमानादस्मासु चानुग्रहबुद्ध्या यथावत्प्रयोगेण अद्य त्वया नाटयितव्यमिति ।**

पदच्छेदः—

'तदिति' तत् ( १।१ ) तस्य ( ६।१ ) एव ( अव्ययम् ) राज्ञः ( ६।१ ) सकलजनहृदयाह्लादिनः ( ६।१ ) बहुमानात् ( ५।१ ) अस्मासु ( ७।३ ) च ( अव्ययम् ) अनुग्रहबुद्ध्या ( ३।१ ) यथावत्प्रयोगेण ( ३।१ ) अद्य ( अव्ययम् ) त्वया ( ३।१ कर्तृप. ) नाटयितव्यम् ( तव्यान्तक्रिया ) इति ( समाप्त्यर्थाव्ययम् ) ।

खण्डान्वय —

तत् त्वया नाटयितव्यम्, कदा अद्य, कस्मात् ? राज्ञो बहुमानात्, कीदृशस्य

राज्ञः ? तस्यैव, पुनः कीदृशस्य ? सकलजनहृदयाह्लादिनः, कया ? अनुग्रहबुद्ध्या, केषु ? अस्मासु, केन ? यथावत्प्रयोगेण, इति । इति खण्डान्वयः ।

व्याख्या—

तन्नाटकं प्रयोगतो न दृष्टम्, अत एवाह 'तदिति' तत् तस्मात्कारणात् तस्यैव पूर्वोक्तस्यैव 'सकलेति' सकलानां सर्वेषां जनानां मनुष्याणां हृदयम् अन्तःकरणम् आह्लादयति तच्छीलः तस्य तादृशस्य राज्ञः श्रीहर्षदेवस्य बहुमानाद् अतिसत्काराद् हेतोः अस्मासु श्रीहर्षदेववशवर्तिराजेषु च अनुग्रहबुद्ध्या कृपाबुद्ध्या यथावत्प्रयोगेण समुचितप्रयोगेण समुचितनटरचनया इत्यर्थः । अद्यास्मिन् दिने त्वया सूत्रधारेण नाटयितव्यं नाट्यरीत्या कर्तव्यमित्यर्थः । इति राजसमूहेनोक्त इति सम्बन्धः ।

**तत् यावत् इदानीं नेपथ्यरचनां कृत्वा यथाभिलषितं सम्पादयामि।**

पदच्छेदः—

"तदिति" तत् ( १।१ ) यावत् ( अव्ययम् ) इदानीम् ( अव्ययम् ) नेपथ्यरचनाम् ( २।१ क्त्वान्तं कर्म. ) कृत्वा (क्त्वान्तक्रिया) यथाभिलषितम् ( क्रिया विशेषणम् ) सम्पादयामि ( क्रिया. ) ॥

खण्डान्वयः—

तद् यावद् यथाभिलषितं सम्पादयामि, किं कृत्वा ? नेपथ्यरचनां कृत्वा कदा ? इदानीम्, इति खण्डान्वयः ।

व्याख्या—

राज्ञामुक्तिमाकर्ण्य सूत्रधार आह—तदिति । तत्तस्मात्कारणाद् यावत् इदानीम् अधुना नेपथ्यरचनां नेपथ्यं रङ्गभूमिः "नेपथ्यं तु प्रसाधने । रङ्गभूमौ वेषभेद इति हैमः" तस्य रचनां निर्मितिं कृत्वा विधाय यथाभिलषितं यथाभिवाञ्छितं सम्पादयामि साधयामि ।

**परिक्रम्यावलोक्य च।**

परिक्रम्य ( ल्यबन्तम् ) इतस्ततः परिभ्रम्य, अवलोक्य ( ल्यबन्तम् ) ( दृष्ट्वा च )

**आवर्जितानि च सकलसामाजिकमनांसि इति मे निश्चयः । यतः—**

पदच्छेदः—

आवर्जितानीति । आवर्जितानि ( १।३ निष्ठान्तक्रिया ) च ( अव्ययम् ) सकलसामाजिकमनांसि ( १।३ कर्मप. ) इति ( अव्ययम् ) मे ( ६।१ ) निश्चयः [ १।१ ] ।

खण्डान्वयः ।

मयेत्यध्याहार्यम्, च पुनः इति मे निश्चयः, को निश्चयः ? मया सकलसामाजिकमनांसि आवर्जितानि, इति । इति खण्डान्वयः ।

व्याख्या—

कार्यारम्भे श्रोतृवृन्दस्यावधानत्वं दर्शयति, 'आवर्जितानीति' सकलेति, सकलाना सर्वेषां सामाजिकानां समाजे भवाः सामाजिकाः (ठक्) तेषां सभ्यानामित्यर्थ मनांसि चित्तानि आवर्जितानि श्रवणार्थम् आत्मसम्मुखम् आकृष्टानि इति मे मम (सूत्रधारस्य) निश्चयः प्रत्ययः अस्तीति शेष. ।

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च सिद्धराजचरितं नाट्ये च दक्षा वयम् ।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥ ३ ॥

पदच्छेदः—

यत (तसिलन्तम्) 'श्रीहर्षः इति' श्रीहर्षः (१।१ कर्ता) निपुणः [१।१ कर्तृवि.] कवि (१।१ कर्तृवि.) परिषत् (१।१) अपि (अव्ययम्) एषा (१।१) गुणग्राहिणी (१।१) लोके (७।१) हारि (१।१) च [अव्ययम्] सिद्धराजचरितम् [१।१] नाट्ये [७।१] च [अव्ययम्] दक्षा [१।३] वयम् [१।३] वस्तु [४।१] एकैकम् [१।१] अपि (अव्ययम्) इह (अव्ययम् । वाञ्छितफलप्राप्तेः (६।१) पदम् (१।१) किम् (अव्ययम्) पुनर् (अव्ययम्) मद्भाग्योपचयात् (५।१ हेतुः) अयम् [१।१ कर्तृवि.] समुदित (निष्ठान्तम्) सर्वः [१।१] कर्तृवि. गुणानाम् (६।१) गणः (१।१ कर्ता) इतिपद. ॥

खण्डान्वय —

एकैकम् अपि वस्तु पदम् [अस्ति] कस्याः ? वाञ्छितफलप्राप्तेः, कुत्र इह, पुन किं वक्तव्यम्, कथम् ? यतोऽयं गुणाना गण. समुदितः, कीदृशः ? सर्व., को गुणाना गण ? तदाह श्रीहर्षः, कीदृशः ? निपुणः कविः, एषा परिषदपि, कीदृशी ? गुणग्राहिणी, च पुन सिद्धराजचरितम् कीदृशं ? हारि, कुत्र ? लोके, च पुनः वयम्, कीदृशाः ? दक्षाः कुत्र ? नाट्ये ।

व्याख्या

सकलसामाजिकमनसामावर्जने हेतुमाह यतः श्रीहर्ष इति । यतो यस्मात्कारणात् । श्रीहर्ष तदाख्यराजः 'अस्य' ग्रन्थस्य कर्ता । निपुण चतुर. कवि. काव्यकर्ता, एषा अग्रे विद्यमाना परिषत् सभाऽपि 'समज्या परिषद्गोष्ठी सभासमितिसंसद.' इत्यमर. । गुणग्राहिणी गुणान् गृह्णाति तच्छीला, लोके संसारे च

सिद्धराजचरितं सिद्धानां राजा सिद्धराजः 'राजाहःसखिभ्यष्टच्', इति टच् । तस्य चरितं चरित्रं हारि मनोहरणशीलम्, वयं सूत्रधारादयो नटाश्च नाट्ये अभिनयकर्मणि दक्षाः कुशलाः, इह अस्मिन् विषये एकैकमपि वस्तु पदार्थः वाञ्छितफलप्राप्तेः वाञ्छितफलस्य इष्टफलस्य प्राप्तिः लाभस्य पदं स्थानं वर्त्तते इति शेष, पुनः मद्भाग्योपचयाद् मम भाग्यो मद्भाग्यः 'प्रत्ययोत्तरपदयोश्चेति मपर्यन्तमादेशः तस्य उपचयाद् उत्कर्षाद्धेतो अथ सर्वः श्रीहर्षादिको गुणानां गुण एषामस्तीति गुणाः 'अर्शआदिभ्योऽच्' तेषा गुणयुक्तवस्तूनामित्यर्थः । गण समूहः समुदितः सम्यग् उदित उपस्थितः किमितिवक्तव्यम् ॥ ३ ॥ 'शार्दूलविक्रीडितं वृत्तम्' अर्थापत्तिरलंकृतिः' 'दण्डापूपिकया न्यायागमोऽर्थापत्तिरिष्यते' इति लक्षणात् ।

**तत् यावत् अहं गृहं गत्वा गृहिणी-माहूय सङ्गीतकमनु तिष्ठामि ।**

पदच्छेदः—

"तदिति" तत् (१।१) यावत् (अव्ययम्) अहम् (१।१ कर्त्ता) गृहम् (२।१ क्त्वान्तकर्म) गत्वा (क्त्वान्तम्)। गृहिणीम् (ल्यबन्त २ १ कर्म) आहूय (ल्यबन्तम्) सङ्गीतकम् (२।१ कर्म) अनुतिष्ठामि (क्रिया)।

खण्डान्वयः—

तद् यावद् अहं सङ्गीतकम् अनुतिष्ठामि, किं कृत्वा ? गृहं गत्वा, पुनः किं कृत्वा ? गृहिणीम् आहूय । इति खण्डान्वयः ।

व्याख्या—

सामाजिकसावधानत्वं प्रदर्श्य स्वसहायकार्यमाह । तदिति । तद्यावद् इदानीमित्यर्थः । अहं (सूत्रधारः) गृहं गत्वा गृहिणीं निजकान्तां नटीमित्यर्थः । आहूय आकार्य "ह्वञधातोर्ल्यपि वचिस्वपियजादीनां किती"ति यजादित्वात्सम्प्रसारणम् । सङ्गीतकं गानम् अनुतिष्ठामि करोमि स्थाधातोरकर्मकत्वेऽपि सोपसर्गत्वात् सकर्मकत्वम् ।

**परिक्रम्य नेपथ्याभिमुखमवलोक्य ।**

पदच्छेदः—

परिक्रम्य (ल्यबन्तम्) नेपथ्याभिमुखम् (२।१ ल्यबन्तकर्म) अवलोक्य (ल्यबन्तम्)।

व्याख्या—

परिक्रम्य इतस्ततो भ्रमणं कृत्वा नेपथ्याभिमुखं नेपथ्यं रङ्गभूमिस्तदभिमुखं तत्सम्मुखम् अवलोक्य दृष्ट्वा आहेतिशेष ।

**इदमस्मद्गृहं यावत् प्रविशामि ।**

इदम् (१।१) अस्मद्गृहम् [१।१] यावत् (अव्ययम्) प्रविशामि

( क्रिया ) इतिपद० । किमाहेति दर्शयति । इदमिति । इदम् अग्रे निर्दिष्टम् अस्मद्-गृहम् अस्माकं गृहं यावत् प्रविशामि अभ्यन्तरं गच्छामीत्यर्थः ।

**प्रविश्य ।**

प्रविश्य ( ल्यबन्तम् ) प्रवेशं कृत्वाऽऽहेति शेषः ।

**आर्य्ये इतस्तावत् ।**

आर्ये ( सम्बोधनम् ) इतः ( तसिलन्तम् ) तावत् ( अव्ययम् ) । किमाह आर्य इति । हे आर्ये मान्ये ? इतस्तावत्—इत आगच्छेत्यर्थः ।

**प्रविश्य नटी । [ सास्रम् ] अज्ज ! इयह्मि मन्दभग्गा ।**

पदच्छेदः—

प्रविश्येति । प्रविश्य ( ल्यबन्तम् ) नटी ( १।१ कर्त्री ) सास्रम् ( क्रिया-विशेषणम् ) आर्य ( सम्बोधनम् ) इयम् ( १।१ कर्त्री ) अस्मि ( क्रिया ) मन्दभाग्या ( १।१ कर्तृविशेषणम् ) इति पदच्छेदः ।

व्याख्या—

आह्वानानन्तरं नट्याः प्रवेशमाह—प्रविश्येति । नटी सूत्रधारस्त्री प्रविश्य प्रवेशं कृत्वा सास्रं साश्रुपातं यथा स्यात्तथा आहेति शेषः, आर्य मान्य, इयं मन्द-भाग्या मन्दं हीनं भाग्यं यस्याः तादशी निर्भाग्येत्यर्थः । अहम् अस्मि आग-तास्मीत्यर्थः ।

**आणवेदु अज्जउत्तो को णिओओ अणुचिठ्ठीअदुत्ति । [क]**

पदच्छेदः—

आज्ञापयत्विति । आज्ञापयतु ( क्रिया ) आर्यपुत्रः ( १।१ कर्ता ) कः (१।१) नियोग ( १।१ ) अनुष्ठीयताम् ( क्रिया ) । इति पदः ।

व्याख्या—

' आर्यपुत्र. श्रेष्टपुत्रः ( सूत्रधारः ) आज्ञापयतु आज्ञा करोतु ' कः कीदशो नियोग कार्यम् अनुष्ठीयता क्रियतामिति ।

**सूत्र । [नटीमवलोक्य । ]**

पदच्छेदः—

' सूत्रेति ' सूत्रधार' ( १।१ ) नटीम् ( २।१ ) अवलोक्य ( ल्यबन्तम् ) । सूत्रधारो नटीम् अवलोक्य दृष्ट्वा कथयति इति शेषः ।

**आर्ये ! नागानन्दे नाटयितव्ये किमिदमकारणमेव रुद्यते ।**

पदच्छेदः—

आर्ये ( सम्बोधनम् ) नागानन्दे ( ७।१ ) नाटयितव्ये ( ७।१ ) किम् (१।१)

---

[ क ] आर्य्य ! इयमस्मि मन्दभाग्या । आज्ञापयतु आर्य्यपुत्रः को नियोगो-ऽनुष्ठीयतामिति ।

इदम् ( १।१ ) अकारणम ( क्रियाविशेषणम् ) एव ( अव्ययम् ) रुद्यते ( क्रिया ) इति पदः ।

व्याख्या—

किं कथयतीत्याह—आर्ये इति । हे आर्ये ? मान्ये ? नागानन्दे तदाख्य-नाटके नाटयितव्ये नाम्यरीत्या दर्शयितव्ये किं निमित्तमिति शेषः, इदं प्रत्यक्षम् अकारणं निष्प्रयोजनम् एव रुद्यते रोदनं क्रियते ।

**नटी । अज्ज ! कधं ण रोइस्सं । यदो दाव तादो अज्जाए सह थविरभावं जाणिअ अदूरजादणिव्वेदो कुडुम्बभारुघहणजोग्गो दाणीं तुमंति हिअए वितक्किअ तवोवणं गदो । [क]**

पदच्छेद —

नटी ( १।१ कर्तृप० ) आर्य ( सम्बोधनम् ) कथम् ( अव्ययम् ) न (अव्ययम् ) रोदिष्यामि ( क्रिया ) । यत ( तसिलन्तम् ) तावत् ( अव्ययम् ) तातः ( १।१ ) आर्यया ( ३।१ ) सह ( अव्ययम् ) स्थविरभावम् ( २।१ ) ज्ञात्वा ( क्त्वान्तम् ) अदूरजातनिर्वेद. ( १।१ ) कुटुम्बभारोद्वहनयोग्य ( १।१ ) इदानीम् ( अव्ययम् ) त्वम् ( १।१ ) इति ( अव्ययम् ) हृदये ( ७।१ ) वितर्क्य ( ल्यबन्तम् ) तपोवनम् ( २।१ ) गत ( निष्ठान्तम् ) इति पद॰ ।

खण्डान्वय.—

आर्य कथं न रोदिष्यामि, यतस्तावत् तात तपोवनं गत, कया सह ? आर्यया सह, कीदृशस्तातः ? अदूरजातनिर्वेदः । किं कृत्वा ? स्थविरभावं ज्ञात्वा, पुनः किं कृत्वा ? इति हृदये वितर्क्य, इतीति किम् त्वं जात इति शेष., कदा ? इदानीम्, कीदृशस्त्वम् ? कुटुम्बभारोद्वहनयोग्य. ।

व्याख्या—

एतन्नाटकबीजदर्शनाय रोदनकारणप्रदर्शनव्याजेनाह नटी—आर्येति । हे आर्य ? मान्य ? कथं केन प्रकारेण न रोदिष्यामि रोदन करिष्यामि, यतो यस्माद्धेतोः अदूरजातनिर्वेदः अदूरम् अत्यन्तं यथा स्यात्तथा जात उत्पन्नो निर्वेद ससारे निर्मोहत्वं यस्य तादृशस्तात: श्वशुर आर्यया श्वश्वा सह 'सहयोगेऽप्रधाने' इति तृतीया, स्थविरभावं जरावस्थात्वं ज्ञात्वा मत्वा 'कुटुम्बेति' कुटुम्बभारस्य पालनीयबन्धुवर्गभारस्य उद्वहने उद्धरणे योग्य. समर्थ त्व ( सूत्रधार ) इदानीम् अधुना जात इति शेष, इत्येवम्प्रकारेण हृदये मनसि वितर्क्य विचार्य तपोवन मलयपर्वतोपरिवर्त्तमानं तपस्याकरणार्थकवनविशेष गतो यात । इति रोदनकारणम् ।

---

(क) आर्य ! कथं न रोदिष्यामि । यतस्तावत् तात आर्यया सह स्थविरभावं ज्ञात्वा अदूरजातनिर्वेद. कुटुम्बभारोद्वहनयोग्य इदानीं त्वमिति हृदये वितर्क्य तपोवनं गत ।

सूत्रधारः । [ सनिर्वेदम् ] अये ! कथं मां परित्यज्य तपोवनं यातौ पितरौ तत् किमिदानीं युज्यते, विचिन्त्य—अथवा कथमहं गुरुचरण-परिचर्या-सुखं परित्यज्य गृहे तिष्ठामि कुतः ।

पदच्छेदः—

सूत्रधार इति, सूत्रधार. ( १।१ कर्त्ता ) सनिर्वेदम् ( क्रियाविशेषणम् ) अये ( सम्बोधनार्थकमव्ययम् ) कथम् ( अव्ययम् ) माम् ( २।१ ) परित्यज्य ( ल्यबन्तम् ) तपोवनम् (२।१) यातौ ( निष्ठान्तम् ) पितरौ ( १।२ ) तत् (१।१) किम् ( अव्ययम् ) इदानीम् ( अव्ययम् ) युज्यते ( क्रिया ) [ विचिन्त्य ( ल्यबन्तम् ) ] अथवा ( अव्ययम् ) कथम् ( अव्ययम् ) अहम् ( १।१ ) गुरुचरणपरिचर्यासुखम् ( २।१ ) परित्यज्य ( ल्यबन्तम् ) गृहे ( ७।१ ) तिष्ठामि (क्रिया) कुतः ( तसिलन्तम् ) इति पदः ।

दण्डान्वयः—

सूत्रधार सनिर्वेदमाह, किमिति अये ? कथं पितरौ तपोवनं यातौ, किं कृत्वा ? मां परित्यज्य, तद् इदानीं किं युज्यते, पुनर्विचिन्त्याह किमिति, अथवा कथं कुत अहं तिष्ठामि, कुत्र ? गृहे, किं कृत्वा ? गुरुचरणपरिचर्यासुखं परित्यज्य ।

व्याख्या—

नटीवाक्यमाकर्ण्य सूत्रधार· सनिर्वेदं सवैराग्यमाह—अय इति । अये ? ( कोमलालापे ) प्रिये ? कथं केन प्रकारेण मा परित्यज्य विहाय पितरौ माता च पिता च पितरौ ( पितामात्रा, इत्येकशेष ) तपोवनं यातौ गतौ, तदिदानीं किं युज्यते कर्तुं शक्यते, ( विचिन्त्य मनसि विचार्याह ) अथवा 'पक्षान्तरे' कथं केनप्रकारेण कुत. कस्मात्कारणाद् अहं ( सूत्रधार· ) गुर्विति, गुरूणां पित्रादीना चरणाना पादानां परिचर्याया उपासनाया· "परिचर्याऽप्युपासनेत्यमरः" सुखम् आनन्दं परित्यज्य दूरीकृत्य गृहे तिष्ठामि ।

पित्रोर्विधातुं शुश्रूषां त्यक्त्वैश्वर्यं क्रमागतम् ।
वनं याम्यहमद्यैव यथा जीमूतवाहनः ॥ ४ ॥

पदच्छेदः—

पित्रोरिति । पित्रो ( ६ । २ ) विधातुम् ( तुमुन्नन्तम् ) शुश्रूषाम् (२ । १) त्यक्त्वा ( क्त्वान्तम् ) ऐश्वर्यम् ( २ । १ ) क्रमागतम् ( २ । १ ) वनम् ( २ । १ कर्म ) यामि ( क्रिया ) अहम् ( १।१ कर्त्ता ) अद्य ( अव्ययम् ) एव (अव्ययम्) यथा ( अव्ययम् ) जीमूतवाहन· ( १ । १ ) ।

खण्डान्वय·—

अहं वनं यामि, किं विधातुम् ? शुश्रूषा विधातुम्, कयो. ? पित्रोः, किं

कृत्वा ? ऐश्वर्यं त्यक्त्वा, कीदृशम् ऐश्वर्यम् ? क्रमागतम्, कदा ? अद्यैव यथा कः ? यथा जीमूतवाहनः ।

व्याख्या—

"सूचयेद्वस्तुबीजं वा मुखं पात्रमथापि वा ।" इति धनञ्जयवचनात् पात्रमेव-सूचयन् सूत्रधार आह—पित्रोरिति । अहम् अद्यैव अस्मिन्नेव काले क्रमागत कुल-क्रमादायातम् ऐश्वर्यं विभूतिं त्यक्त्वा विहाय पित्रोः मातापित्रोः शुश्रूषाम् उपासनाम् "वरिवस्या तु शुश्रूषा परिचर्याऽप्युपासने" त्यमरः । विधातुं कर्तुं 'यथा जीमूत-वाहनः' जीमूतवाहनो नामास्य नाटकस्य नेता स इव वनम् अरण्यं यास्यामि गमिष्यामि ॥ ४ ॥

अनुष्टुब् वृत्तम् । उपमालङ्कारः 'साधर्म्यमुपमाभेदे' इति लक्षणात् ॥

---

## प्रस्तावना ।

ततः प्रविशति नायको विदूषकश्च ।

**नायकः [ सनिर्वेदम् ] वयस्य आत्रेय !**

प्रस्तावनेति । प्रस्तूयते सूच्यते प्रक्रान्तं वस्तु अनयेति प्रस्तावना, 'प्रपूर्वात्स्तौतेर्ण्यन्तात् "ण्यासश्रन्थो युच्" इति युच् तल्लक्षणं यथा दर्पणे "नटी विदूषको वापि पारिपार्श्विक एव वा । सूत्रधारेण सहिताः सलापं यत्र कुर्वते ॥ चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा । इति । यथा वा दशरूपे "सूत्रधारो नटीं ब्रूते मार्षं वाऽथ विदूषकम् । स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदाऽऽमुखम् । इति ॥

नायक इति । नयति रसं भावं वा स्वाङ्गतामिति नायकः । नीधातोर्ण्वुल् तल्लक्षणं यथा दर्पणे । त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही । दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान्नेता । इति । अत्र च नायकभेदेषु धीरोदात्तो नायको जीमूतवाहननामा तल्लक्षणं यथा दशरूपके "महासत्वोऽतिगम्भीरः क्षमावानविकत्थनः । स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रतः" । इति ॥

विदूषक इति । विशेषेण दूषयति परमनोवैकृतं करोति वेषोपचारादिनेति विदूषकः । तल्लक्षणं यथा दशरूपके "हास्यकृच्च विदूषकः" । इति ।

वयस्येति । वयस्य ( सम्बोधनम् ) आत्रेय ( सम्बोधनम् ) इतिपदः । हे वयस्य ? वयसि भवो वयस्यः "यत्" समानवया इत्यर्थः तत्सम्बुद्धौ ? आत्रेय ? अत्रेरपत्यमात्रेयः "इतश्चानिञः" । इति ढक् । तत्सम्बुद्धौ हे आत्रेय ।

> **रागस्यास्पदमित्यवैमि न हि मेध्वंसीति न प्रत्ययः**
> **कृत्याकृत्यविचारणासु विमुखं को वा न वेत्ति क्षितौ ।**
> **एवं निन्द्यमपीदमीप्सितफलप्राप्त्यै भवेद् यौवनं**
> **भक्त्या याति यदीत्थमेव पितरौ शुश्रूषमाणस्य मे ॥ ५ ॥**

रागस्येति ।

'पदच्छेद.'

रागस्य ( ६ । १ ) आस्पदम् ( १ । १ कर्तृविशेषणम् ) । इति ( अव्ययम् ) अवैमि ( क्रिया ) न ( अव्ययम् ) हि ( अव्ययम् ) मे ( ६ । १ ) ध्वंसि ( १ । १ कर्तृवि. ) इति ( अव्ययम् ) न ( अव्ययम् ) प्रत्ययः ( १ । १ ) कृत्याकृत्यविचारणासु ( ७ । ३ ) विमुखम् ( २ । १ कर्तृविशे. ) कः ( १ । १ ) वा ( अव्ययम् ) न ( अव्ययम् ) वेत्ति ( क्रिया ) क्षितौ ( ७ । १ ) एवम् ( अव्ययम् ) निन्द्यम् ( १ । १ कर्तृविशेष ) अपि ( अव्ययम् ) इदम् ( १ । १ कर्तृवि. ) ईप्सितफलप्राप्त्यै ( ४ । १ ) भवेत् ( क्रिया ) यौवनम् ( १ । १ कर्तृपदम् ) भक्त्या ( ३ । १ ) याति ( क्रिया ) यदि ( अव्ययम् ) इत्थम् ( अव्ययम् ) एव ( अव्ययम् ) पितरौ ( २ । २

सन्नन्तकर्म ) शुश्रूषमाणस्य ( ६ । १ सन्नन्तम् ) मे ( ६ । १ )।

'खण्डान्वयः'

एवं निन्द्यमपि इदं यौवनं यदि इत्थं मे याति, कीदृशस्य मे ? शुश्रूषमाणस्य, कौ ? पितरौ, कया ? भक्त्या, तर्हि ईप्सितफलप्राप्त्यै भवेत्। कथं निन्द्यम् ? इति पूर्वार्धे न निन्द्यतामेव दर्शयति, इति अवैमि, इतीति किम् ? आस्पदम्, कस्य ? रागस्य, इति मे प्रत्ययो न इति न, इति किम् ? ध्वंसि, वा को न विमुखं वेत्ति, कासु ? कृत्याकृत्यविचारणासु, कुत्र ? क्षितौ ॥

दण्डान्वयेन व्याख्या—

निर्वेदत्वं दर्शयन्नाह रागस्येति।

इदं यौवनं रागस्य विषयवासनाया आस्पदं स्थानम् इत्यहम् अवैमि जानामि 'अवपूर्वाद् इणधातोर्लट्। ध्वंसि विनश्वरं ( यौवनम् ) इति मे मम ( जीमूतवाहनस्य ) प्रत्ययो निश्चयो न इति न अपितु प्रत्यय एव "नञ्द्वयं दार्ढ्यबोधकम्" वा "पक्षान्तरे" को जनः क्षितौ पृथिव्यां कृत्येति, कृत्यं चाकृत्यं च कृत्याकृत्ये तयोर्विचारणासु ज्ञानेषु कर्त्तव्याकर्त्तव्यविचारेष्वित्यर्थः, विमुखं विपरीतं न वेत्ति जानाति "विदधातोर्लट्" अपितु सर्व एव वेत्तीति, एवम् उक्तप्रकारेण निन्द्य निन्दितु योग्यमपि इदं वर्त्तमानकालीनं यौवनं मध्यमावस्था यदि इत्थम् अनेन प्रकारेणैव पितरौ भक्त्या प्रीत्या शुश्रूषमाणस्य उपासमानस्य श्रुधातोः सन्नन्तात् "ज्ञाश्रुस्मृदृशां सन" इत्यात्मनेपदत्वाच्छानच्। मे मम याति गच्छति तर्हि ईप्सितफलप्राप्त्यै आप्तुमिष्टम् ईप्सितम् आप्लृधातो सन्नन्तात् क्तप्रत्ययः "आप्ज्ञप्यृधामीत्" इतीत्, अत्र "लोपोऽभ्यासस्य" इत्यभ्यासलोपः। यत् फलं तस्य प्राप्त्यै लाभाय भवेत् ॥

शार्दूलविक्रीडितं वृत्तम्। काव्यलिङ्गालङ्कार "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते" इति लक्षणात्।

**विदूषकः। [ सरोषम् ] भो वयस्स ! णं णिव्विण्णो एव्व तुमं एत्तिअं कालं एदाणं जीवन्तमुआणं कदे इमं ईदिसं वणवासदुक्खं अणुहवन्तो। ता पसीद दाणिं पि दाव गुरुचरणसुस्सूसाणिब्बन्धादो णिअत्तिअ इच्छापरिभोगरमणिज्जं रज्जसुहं अणुहवीअदु [क]**

भो वयस्येति।

पदच्छेद —

भो ( अव्ययम् ) वयस्य ( सम्बोधनम् ) ननु ( अव्ययम् ) निर्विण्ण ( १।१ कर्तृविशे. ) एव ( अव्ययम् ) त्वम् ( १ । १ कर्ता ) एतावन्तम् ( २ । १ कालवि. )

---

[ क ] भो वयस्य ! ननु निर्विण्ण एव त्वमेतावन्तं कालं एतयोर्जीवन्मृतयो कृते इदमीदृशं वनवासदुःखमनुभवन् तत् प्रसीद इदानीमपि तावत् गुरुचरणशुश्रूषानिर्बन्धात् निवृत्त्य इच्छापरिभोगरमणीयं राज्यसुखं अनुभूयताम्।

कालम् ( २ । १ ) एतयोः ( ६ । २ ) जीवन्मृतयोः ( ६ । २ ) कृते ( अव्ययम् ) इदम् ( २ । १ शतृप्रत्ययान्तकर्मविशे. ) ईदृशम् [ २ । १ तदेव ] वनवासदु खम् ( २ । १ शतृप्रत्ययान्तकर्म ) अनुभवन् ( १ । १ शतृप्रत्ययान्तम् ) तत् ( १ । १ ) प्रसीद ( क्रिया ) इदानीम् ( अव्ययम् ) अपि ( अव्ययम् ) तावत् ( अव्ययम् ) गुरुचरणशुश्रूषानिर्बन्धात् ( ५।१ ) निवृत्य ( ल्यबन्तम् ) इच्छापरिभोगरमणीयम् ( २ । १ कर्मविशे. ) राज्यसुखम् ( २ । १ कर्म ) अनुभूयताम् ( क्रिया ) ।

खण्डान्वय.—

भो वयस्य ? ननु त्वम् एतावन्तं कालम् वनवासदु खम् अनुभवन् असीति शेष., कीदृश एव त्वम् ? निर्विण्ण एव, कयो. कृते ? एतयाः कृते ? कीदृशयो ? जीवन्मृतयो ? । तत् प्रसीद, इदानीमपि तावद् गुरुचरणशुश्रूषानिर्बन्धाद् निवृत्य राज्यसुखम् अनुभूयताम्, कीदृशं राज्यसुखम् ? इच्छापरिभोगरमणीयम् ।

व्याख्या—

नायकस्य निर्विण्णत्वं विज्ञाय विदूषकः ( सरोषं सक्रोधम् ) आह भो वयस्येति । भो वयस्य ? मित्र ? ननु ( वितर्के ) निर्विण्णो वीतराग एव त्वम् एतावन्त कालं समयम् ( कालाध्वनोरत्यन्तसंयोगे इति द्वितीया ) जीवन्मृतयो. जीवन्तौ एव मृतौ जीवन्मृतौ तयो । मृतप्राययोरित्यर्थ. । कृते निमित्तम् इदं वर्तमानकालिकम् ईदृशम् । दु सहमित्यर्थः । वनवासदु.खं वननिवासकष्टम् अनुभवन् असि । तत् तस्मात्कारणात् प्रसीद प्रसन्नो भव । इदानीमपि तावत् । गुर्विति । गुर्वो· पित्रा चरणाना पादानां या शुश्रूषा उपासना तस्या निर्बन्धात् सहसा करणाद् निवृत्य दूरीभूय । इच्छेति । इच्छया कामनया र· । परिभोगो विषयानुभव तेन रमणीयं रन्तुं योग्यं राज्यसुखम् अनुभूयताम् परिभुज्यतामित्यर्थः ।

**नायकः । वयस्य ! न सम्यगभिहितं त्वया । कुतः ।**

नायक , आहेति शेष । न सम्यक् शोभनम् अभिहितं कथितम् ( अभिपूर्वाद् धा धातोर्निष्ठा "दधातेर्हिः" इति हि. । ) त्वया विदूषकेण । कुत· ।

**तिष्ठन् भाति पितुः पुरो भुवि यथा सिंहासने किं तथा**
**यत् संवाहयतः सुखं तु चरणौ तातस्य किं राजके ।**
**किं भुक्ते भुवनत्रये धृतिरसौ भुक्तोज्झिते या गुरो-**
**रायासः खलु राज्यमुज्झितगुरोस्तत्रास्ति कश्चिद्गुणः ॥ ६ ॥**

तिष्ठन्निति ।

पदच्छेदः

तिष्ठन् ( १ । १ शतृप्र. ) भाति ( क्रिया ) पितु. ( ६ । १ ) पुरम् ( अव्ययम् ) भुवि ( ७ । १ ) यथा ( अव्ययम् ) सिंहासने ( ७ । १ ) किम् ( अव्ययम् ) तथा ( अव्ययम् ) यत् (१.१ सुखविशे.) संवाहयत ( ६।१ शतृप्रत्ययान्तम् ) सुखम्

( १।१ ) तु ( अव्ययम् ) चरणौ ( २।२ शतृप्रत्यान्तकर्म ) तातस्य ( ६।१ ) किम् [ अव्ययम् ] राजके [ ७।१ ] किम् [ अव्ययम् ] भुक्ते [ ७।१ क्तान्तम् ] भुवनत्रये [ ७।१ ] धृतिः [ १।१ ] असौ [ १।१ धृतिविशे. ] भुक्तोज्झिते [७।१] या [ १।१ धृतिविशे. ] गुरोः [ ६।१ ] आयासः [ १।१ ] खलु [ अव्ययम् ] राज्यम् [ १।१ ] उज्झितगुरोः [ ६।१ ] तत्र [ अव्ययम् ] अस्ति [ क्रिया ] कश्चित् [ १।१ ] गुण [ १।१ कर्त्ता ]

दण्डान्वयः—

यथा पितुः पुरः तिष्ठन् भाति, कस्याम् ? भुवि तथा किं सिंहासने भाति ?, संवाहयतो यत्सुखम्, कौ ? चरणौ, कस्य ? तातस्य तत्किं राजके भवति ? भुवनत्रये भुक्ते किम् असौ धृतिर्भवतीति शेषः, कीदृशी ? या भुक्तोज्झिते भुक्ते भवति, कस्य गुरोः, उज्झितगुरो राज्यम् आयासः खलु, तत्र कश्चिद् गुणोऽस्ति? नेत्यर्थः।

व्याख्या—

विदूषकवचनममन्यमानः पितृशुश्रूषाकरणमेव द्रढयन्नाह-तिष्ठन्निति । मानव इत्यध्याहार्यम् । यथा पितुर्जनकस्य पुरोऽग्रतो भुवि पृथिव्या नत्वासने तिष्ठन् उपविशन् भाति शोभते, तथा किं सिंहासने नृपत्यासने तिष्ठन् भाति ? कदापि नेत्यर्थः । तातस्य पितु चरणौ पादौ संवाहयतः पूजयत पुरुषस्य तु यत् सुखं भवति, किं राजके नृपतिगणे " अथ राजकम् । राजन्यकं च नृपतिक्षत्रियाणा गणे क्रमादि " त्यमरः तत् सुखं भवति कथमपि नेत्यर्थः । किं भुवनत्रये त्रयाणा समाहारस्त्रयं भुवनानां जगता " विष्टपं भुवनं जगत् " इत्यमर त्रयं भुवनत्रयं तस्मिन् भुक्ते आस्वादिते असौ धृतिः सन्तुष्टिर्भवति ? या गुरो. पितु भुक्तोज्झिते पूर्वं भुक्तं पुनरुज्झितं भुक्तोज्झितम् " पूर्वकालैकसर्वजर " दित्यादिना समासः । तस्मिन् द्रव्य इति शेषः । धृतिर्भवति । नेत्यर्थः । उज्झितगुरोः उज्झितस्त्यक्तो गुरुर्येन तादृशस्य पुरुषस्य राज्यम् आयास. खलु क्लेशमात्रमेवेत्यर्थः । तत्र गुरुशुश्रूषाविरहिते विषये कश्चिद् गुणोऽस्ति ? न कोऽपीत्यर्थः ॥ ६ ॥ शार्दूलविक्रीडितं वृत्तम् । व्यतिरेकालङ्कारः । " उपमानाद्यदन्यस्य व्यतिरेक. स एव सः " इति लक्षणात्।

विदूषकः । [ आत्मगतम् ]

आत्मगतमिति । । आत्मनि गतम् स्वगतमित्यर्थः । तल्लक्षणं यथा दशरूपे— " अश्राव्यं स्वगतं मतम् " इति ।

अहो ! से गुरुअणसुस्सूसाखुराओ । [ विचिन्त्य ] भोदु ता एदंपि दाव अण्णं विअ दाव भणिस्सं । (प्रकाशं) भो वअस्स ण क्खु अहं रज्जसोक्खं ज्जेव केवलं उद्दिसिअ एव्वं भणामि । अण्णंपि दे

करणीअं अत्थिज्जेव । [ क ]

अहो इति ।

पदच्छेद·—

अहो ( अव्ययम् ) अस्य ( ६।१ ) गुरुजनशुश्रूषानुरागः ( १।१ ) विचि-न्त्य ( ल्यबन्तम् ) भवतु ( क्रिया ) तत् ( १।१ ) एतद् ( २।१ ) अपि ( अव्ययम् ) । तावत् ( अव्ययम् ) अन्यत् ( २।१ ) इव ( अव्ययम् ) तावत् ( अव्ययम् ) भणिष्यामि ( क्रिया ) प्रकाशम् ( क्रियाविशेषणम् ) भोः ( अव्ययम् ) वयस्य ( सम्बोधनम् ) न ( अव्ययम् ) खलु ( अव्ययम् ) अहम् ( १।१ कर्ता ) राज्यसुखम् ( २।१ ल्यबन्तकर्म ) एव ( अव्ययम् ) केवलम् ( क्रियाविशे० ) उद्दिश्य ( ल्यबन्तम् ) एवम् ( अव्ययम् ) भणामि ( क्रिया ) अन्यत् ( १।१ ) अपि ( अव्ययम् ) ते ( ६।१ ) करणीयम् ( अनीयरन्तम् ) अस्ति ( क्रिया ) एव ( अव्ययम् ) ।

व्याख्या—

जीमूतवाहनस्य शान्तत्वे विदूषकस्य भोजनादि न सिद्धयति, इति तस्मा-यत्र गमयितुं विदूषको विचारयति, आत्मगतम् अहो इति । अहो आश्चर्यम् स्य जीमूतवाहनस्य । गुर्विति । गुरुजनस्य पितृजनस्य शुश्रूषायाम् उपासनायाम् नुरागः प्रेम अस्ति । 'पुनर्विचिन्त्य विचार्याह, भवतु अस्तु, तावत् इदानीं तस्मात्कारणात् एतदपि । कार्यवचनमित्यर्थ· । अन्यदिव प्रकारान्तरेणेत्यर्थः । ावद् भणिष्यामि कथयिष्यामि , ' पुन प्रकाशं सर्वश्रवणयोग्यमित्यर्थ., ' सर्व-व्यं प्रकाशं स्यात्, इतिलक्षणम् । आह—भो वयस्य ! हे मित्र ! न खलु अहं विदूषक ) केवलं राज्यसुखमेव उद्दिश्य लक्षणीकृत्य एवम् उक्तप्रकारेण भणामि थयामि । किन्तु, अन्यदपि तदतिरिक्तमपि ते तव 'कृत्यानां कर्त्तरि वा, इति षष्ठी' रणीयं कर्तुं योग्यम् अस्त्येवेति ।

नायकः । ( सस्मितम् ) वयस्य ! ननु कृतमेव यत्करणीयम् ।

रस्य—

सस्मितमिति ।

पदच्छेद·—

[ सस्मित ( क्रियाविशे० )] वयस्य ! ( सम्बोधनम् ) ननु ( अव्ययम् ) कृतम् ( निष्ठान्तम् ) एव ( अव्ययम् ) यत् ( १।१ ) करणीयम् ( अनीयरन्तम् )

---

( क ) अहो ! तस्य गुरुजनशुश्रूषानुराग. । भवतु तदेतदपि तावत् अन्य-दिव तावत् भणिष्यामि । भो वयस्य । न खल्वहं राज्यसुखमेव केवलमुद्दिश्य एवं भणामि अन्यदपि ते करणीयमस्त्येव ।

व्याख्या—

नायको जीमूतवाहनः सस्मितं समन्दहासमाह—ननु निश्चयेन यत्र करणीयं कर्त्तव्यं तत् कृतं सम्पादितमेव। पश्य अवलोकय।

न्याय्ये वर्त्मनि योजिताः प्रकृतयः सन्तः सुखं स्थापिता
नीतो बन्धुजनस्तथात्मसमतां राज्ये च रक्षा कृता।
दत्तो दत्तमनोरथाधिकफलः कल्पद्रुमोऽप्यर्थिने
किं कर्त्तव्यमतःपरं कथय वा यत्ते स्थितं चेतसि ॥ ७ ॥

न्याय्य इति।

पदच्छेद—

न्याय्ये ( ७।१ अधिकरणविशे० ) वर्त्मनि ( ७।१ अधिकरणम् ) योजित ( १।३ निष्ठान्तम् ) प्रकृतयः ( १।३ निष्ठान्तकर्म ) सन्तः ( १।३ ) सुख ( क्रियाविशे० ) स्थापिताः ( १।३ निष्ठान्तम् ) नीत ( १।१ निष्ठान्तम् ) बन्धुजः ( १।१ निष्ठान्तप्रधानकर्म ) तथा (अव्ययम्) आत्मसमत.म् (२।१ निष्ठाऽप्रधानकर्म राज्ये ( ७।१ ) च ( अव्ययम् ) रक्षा ( १।१ ) कृता ( १।१ निष्ठान्तम् ) दत्त ( १।१ निष्ठान्तम् ) दत्तमनोरथाधिकफल. ( १।१ निष्ठान्तकर्मविशे० ) कल्पद्रुम ( १।१ निष्ठान्तकर्म ) अपि ( अव्ययम् ) अर्थिने ( ४।१ सम्प्रदानम् ) कि ( १।१ ) कर्त्तव्यम् ( १।१ तव्यान्तम् ) अत· ( तसिलन्तम्) परम् [ १।१ ] कथय [ क्रिया ] वा [ अव्ययम् ] यत् [ १।१ ] ते [ ६ १ ] [ स्थितम् १।१ निष्ठान्तम् ] चेतसि [ ७।१ ]।

खण्डान्वयः—

प्रकृतयो वर्त्मनि योजिताः, कीदृशे वर्त्मनि ? न्याय्ये, सन्त सुख स्थापिता तथा बन्धुजन आत्मसमतां नीत., राज्ये च रक्षा कृता, अर्थिने कल्पद्रुमोऽपि दत्त कीदृशः कल्पद्रुमः ? दत्तमनोरथाधिकफलः, अतः पर किं कर्तव्यम्, ते चेतसि यत् स्थितं तत्कथय।

व्याख्या—

सर्वं करणीयं निवारयन्नाह—न्याय्य इति। प्रकृतय· सचिवादयो न्याय्ये न्याययुक्ते 'धर्मपथ्यर्थन्यायादनपेते' इतियत् वर्त्मनि मार्गे योजिता स्थापिता इत्यर्थः। मयेति सर्वत्र सम्बध्यते। सन्त· सुधिय. 'सन्सुधीः पण्डित कवि' रित्यमर. सुखं यथास्यात्तथा स्थापिता निधत्ताः। बन्धुजनो बन्धुवर्ग आत्मसमतां स्वतुल्यता नीतः प्रापितः णिञ् धातो· द्विकर्मकत्वात्कर्मद्वयम् राज्ये च रक्षा कृता, अर्थिने याचकाय जातावेकवचनम्। अर्थिभ्य इत्यर्थ.। दत्तेति। दत्तं समर्पितं मनोरथाद् इच्छातोऽपि अधिकं फल येन तादृश कल्पद्रुम कल्पद्रुमोऽपि दत्त

समर्पित:, अतोऽस्मात् परं किं कर्त्तव्यं विधेयम्, ते तव चेतसि हृदये स्थितं तत् कथय वद।

विदूषकः। भो वअस्स अच्चन्तसाहसिओ मदङ्गहदओ दे पडिवक्खो, तस्सिं च समासण्णठ्ठिदे दे पधाणामच्चसमधिट्ठिदंपि ण तुए विणा रज्जं सुस्थिरं ति पडिभादि। [क]

अत्यन्तेति,

पदच्छेदः—

अत्यन्तसाहसिकः [ १।१ कर्तृविशे० ] मतङ्गहतकः [ १।१ कर्त्ता ] ते [६।१] प्रतिपक्षः [ १।१ ] तस्मिन् [ ७।१ ] च [ अव्ययम् ] समासन्नस्थिते [ ७।१ ] ते [ ६।१ ] प्रधानामात्यसमधिष्ठितम् [ १।१ कर्तृविशे० ] अपि [ अव्ययम् ] न [ अव्ययम् ] त्वया [ ३।१ ] विना [ अव्ययम् ] राज्यम् [ १।१ कर्तृ ] सुस्थिरम् [ १।१ कर्तृविशेषणम् ] इति [ अव्ययम् ] प्रतिभाति [ क्रिया ]।

खण्डान्वयः—

ते मतङ्गहतक प्रतिपक्षः, कीदृश ? अत्यन्तसाहसिकः, तस्मिन् च समासन्नस्थिते ते राज्यं सुस्थिरं न इति प्रतिभाति, कीदृशमपि राज्यम्? प्रधानामात्यसमधिष्ठितमपि, केन विना? त्वया विना।

व्याख्या—

अकरणीयत्वं विज्ञाय विषयान्तरमाह—अत्यन्तेति। अत्यन्तसाहसिकः अत्यन्तं प्रभूतं यथास्यात्तथा साहसिकः साहसं करोति साहसिकः (ठक्) तादृशो मतङ्गहतकः दुष्टमतङ्गः ते तव प्रतिपक्षः शत्रुः। तस्मिन् च मतंगहतके समासन्नस्थिते समीपस्थिते। प्रधानेति। प्रधानैः मुख्यैरमात्यैर्मन्त्रिभिः समधिष्ठितं सुरक्षितम् अपि ते तव राज्यं न सुस्थिरं सुदृढम्, इत्येवं प्रतिभाति प्रतीयते।

नायकः! धिङ्मूर्ख! मतङ्गो राज्यं हरिष्यतीति शङ्कसे।

विदूषकः। अध इं [ ख ]

धिगिति।

पदच्छेदः।

धिक् ( अव्ययम् ) मूर्ख ( सम्बोधनम् ) मतङ्गः ( १।१ कर्त्ता ) राज्यम् ( २।१ कर्म ) हरिष्यति ( क्रिया ) इति ( अव्ययम् ) शङ्कसे ( क्रिया )।

व्याख्या।

मतङ्गाद्भीतिं निवर्त्तयन्नाह—धिगिति। हे मूर्ख जड! त्वा धिक्, मतङ्गः

---

(क) भो वयस्य! अत्यन्तसाहसिको मतङ्गहतकस्ते प्रतिपक्षः। तस्मिंश्च समासन्नस्थिते ते प्रधानामात्यसमधिष्ठितमपि न त्वया विना राज्यं सुस्थिरमिति प्रतिभाति।

(ख) अथ किम्।

तदाख्यो मद्वैरी राज्यं हरिष्यति इत्येवं शङ्कसे सम्भावयसि ?

**नायकः। यद्येवं तत् किं न स्यात्। ननु स्वशरीरात् प्रभृति सर्वं परार्थमेव मया परिपाल्यते यत्तु स्वयं न दीयते तत्तातानुरोधात् तत् किमनेनावस्तुना चिन्तितेन वरं ताताज्ञैवानुष्ठिता, आज्ञापितश्चास्मि तातेन। यथा वत्स ! जीमूतवाहन ! बहुदिवसपरिभोगेण स्वीकृतसमित्कुशकुसुममुपभुक्तमूलफलकन्दनीवारप्रायमिदं स्थानं वर्त्तते। तदितो मलयपर्वतं गत्वा किञ्चित्तस्मिन् निवासयोग्यमाश्रमपदं निरूपयेति। तदेहि मलयपर्वतमेव गच्छावः।**

यद्येवमिति।

पदच्छेद.—

यदि ( अव्ययम् ) एवम् ( अव्ययम् ) तत् ( १ । १ ) किम् ( १ । १ ) न ( अव्ययम् ) स्यात् ( क्रिया )। ननु ( अव्ययम् ) स्वशरीरात् ( ५ । १ ) प्रभृति ( १ । १ कर्मवि. ) सर्वम् ( १ । १ कर्म ) परार्थम् ( क्रियाविशे. ) एव ( अव्ययम् ) मया ( ३ । १ कर्ता ) परिपाल्यते ( क्रिया )। यत् ( १ । १ ) तु ( अव्ययम् ) स्वयम् ( अव्ययम् ) न ( अव्ययम् ) दीयते ( क्रिया ) तत् (६।१) तातानुरोधात् ( ५ । १ )। तत् ( ६ । १ ) किम् ( अव्ययम् ) अनेन ( ३ । १ ) अवस्तुना ( ३ । १ ) चिन्तितेन (निष्ठान्तम् ३ । १) वरम् ( अव्ययम् ) ताताज्ञा ( १ । १ निष्ठान्तकर्म ) अनुष्ठिता ( १ । १ निष्ठान्तम् ) आज्ञापित. ( १ । १ निष्ठान्तम् ) च ( अव्ययम् ) अस्मि ( क्रिया ) तातेन ( ३ । १ कर्त्ता ) यथा ( अव्ययम् ) वत्स ? ( सम्बोधनविशे ) जीमूतवाहन ( सम्बोधनम् ) बहुदिवसपरिभोगेण ( ३ । १ हेतुना ) स्वीकृतसमित्कुशकुसुमम् (१ । १ कर्तृविशे.) उपभुक्तमूलफलकन्दनीवारप्रायम् ( १ । १ कर्तृविशे. ) इदम् ( १ । १ कर्तृविशे ) स्थानम् ( १ । १ कर्तृ ) वर्त्तते ( क्रिया )। तत् ( १ । १ ) इतः ( तसिलन्तम् ) मलयपर्वतम् ( २ । १ क्त्वान्तकर्म ) गत्वा ( क्त्वान्तम् ) किम् ( २ । १ कर्मविशे. ) चित् ( अव्ययम् ) तस्मिन् ( ७ । १ ) निवासयोग्यम् ( २ । १ कर्मविशे.) आश्रमपदम् ( २ । १ कर्म ) निरूपय ( क्रिया ) इति ( अव्ययम् ) तत् ( १ । १ ) एहि [ क्रिया ] मलयपर्वतम् [ २ । १ कर्म. ] एव [ अव्ययम् ] गच्छावः [ क्रिया ] ॥

व्याख्या—

राज्यहरणमिष्टसिद्धिरेवास्माकमिति दर्शयति—यदीति। यदि एवं यदि स राज्यं" हरिष्यत्येवेत्यर्थः। तत् किं न स्यात् सर्वं यथेष्टमेव स्यादित्यर्थ। तदेवाह—नन्विति। ननु [ निश्चये ] स्वशरीरात् प्रभृति आदिस्वदेहादारभ्येत्यर्थ। सर्वं पदार्थजातं पदार्थसामान्यं परोपकारार्थमेव मया जीमूतवाहनेन परिपाल्यते परि-

रुध्यते, यद् यस्माद्धेतोः स्वयं न दीयते समर्प्यते तत् तातानुरोधात् तातस्य पितुः अनुरोधात् निवारणात्, राज्यादाने तातानुरोध एव हेतुरित्यर्थः, तत्तस्मात्कारणाद् अनेन अवस्तुना क्षुद्रवस्तुना। राज्येनेत्यर्थः। चिन्तितेन ध्यातेन किम्? न किमपि प्रयोजनमित्यर्थः। अत, ताताज्ञा जनकाज्ञा एव अनुष्ठिता कृता सती वरं श्रेष्ठा। तातेन पित्रा च एवम् आज्ञापितोऽस्मि अनुशिष्टोऽस्मि, यथा, वत्स? पुत्र? जीमूतवाहन? बहुदिवसपरिभोगेण बहुभिर्दिवसैर्यः परिभोगः अनुवर्तनं तेन हेतुना। स्वीकृतेति। स्वं कृतानि गृहीतानि समिधः शुष्ककाष्ठानि कुशा दर्भाः कुसुमानि पुष्पाणि च यस्मात् तादृशम्। उपभुक्तेति। उपभुक्ता भक्षिता मूलानि फलानि कन्दा मूलविशेषा नीवारा श्यामाकादयो मुन्यन्नविशेषाश्च प्रायेण बाहुल्येन यत्र तत्, एतादृशम् इदं स्थानं वर्तते विद्यते, तत्तस्मात्कारणात् इतोऽस्मात् स्थानाद् मलयपर्वतं गत्वा तस्मिन् मलयपर्वते किञ्चिद् निवासयोग्यं निवासोचितम् आश्रमपदम् आश्रमस्थानं निरूपय अवलोकय। इत्याज्ञापितोस्मि, इति सम्बन्धः। तत्तस्माद्धेतो एहि आगच्छ आङ् पूर्वाद् इण् धातोर्लोटि मध्यमपुरुषैकवचनम्। मलयपर्वतमेव गच्छाव याव.॥

**विदूषकः। जं भवं आणवेदि। एदु भवं [इति उभौ परिक्रामतः]। (क)**

यदिति।

पदच्छेद —

यद् (२।१ कर्म) भवान् (१।१ कर्त्ता) आज्ञापयति (क्रिया)। एतु (क्रिया) भवान् (१।१ कर्त्ता)।

व्याख्या—

भवान् (नायकः) यद् आज्ञापयति अनुशास्ति। भवान् एतु आगच्छतु। (उभौ द्वौ)।

**विदूषक। [अग्रतोऽवलोक्य] भो वयस्स! पेक्ख पेक्ख एसो क्खु, सरसघणचन्दणवणुच्छङ्गपरिमिलणलग्गबहलपरिमलो विमलतडणिवडणजज्जरिज्जन्तणिज्झरुच्छालितासिसिरसीअरासारवाही पढमसङ्गमोक्कण्ठिदपिआकण्ठग्गहो विअ मग्गपरिस्समं अवणअन्तो रोमञ्चेदि पिअवअस्सं मलअमारुदो। (ख)**

---

(क) यद् भवानाज्ञापयति। एतु भवान्।

(ख) भो वयस्य! प्रेक्षस्व एष खलु सरसघनचन्दनवनोत्सङ्गपरिमिलनलग्नबहलपरिमलो विमलतटनिपतनजर्जरायमाणनिर्झरोच्छलितशिशिरशीकरासारवाही प्रथमसङ्गमोत्कण्ठितप्रियाकण्ठग्रह इव मार्गपरिश्रममपनयन् रोमाञ्चयति प्रियवयस्यं मलयमारुतः।

प्रेक्षस्वेति"

खण्डान्वयः—

प्रेक्षस्व (क्रिया) एष. (१।१ कर्तृविशे.) खलु (अव्ययम्) सरसघ चन्दनवनोत्सङ्गपरिमिलनलग्नबहलपरिमलः (१।१ कर्तृविशे.) विमलतटनि नजर्जरायमाणनिर्झरोच्छलितशिशिरशीकरासारवाही (१।१ कर्तृविशेषणम् प्रथमसङ्गमोत्कण्ठितप्रियाकण्ठग्रहः (१।१ उपमानम्) इव (अव्ययम्) म परिश्रमम् (२।१ शत्रन्तकर्म) अपनयन् (१।१ शत्रन्तं कर्तृविशे०) रो ञ्चयति (क्रिया) प्रियवयस्यम् (२।१) कर्म मलयमारुत (१।१ कर्ता)।

प्रेक्षस्व प्रेक्षस्व एष खलु मलयमारुतः प्रियवयस्यं रोमाञ्चयति, कीद मलयमारुत: ? सरसघनचन्दनवनोत्संगपरिमिलनलग्नबहलपरिमल', पुन कीदृश विमलतटनिपतनजर्जरायमाणनिर्झरोच्छलितशिशिरशीकरासारवाही, क इव प्रथमसङ्गमोत्कण्ठितप्रियाकण्ठग्रह इव, किं कुर्वन् ? मार्गपरिश्रमम् अपनयन्।

व्याख्या—

मलयादागतं पवनं वर्णयन्नाह-प्रेक्षस्वेति। प्रेक्षस्व प्रेक्षस्व पश्य पश्य अति शयबोधनार्थं द्विर्वचनम् सरसेति सरसाना स्निग्धानां घनाना सान्द्राणा चन्दना यद् वनं तस्योत्सङ्गस्य क्रोडस्य परिमिलनेन संगमेन लग्न उत्पन्नो बहल. प्रभूत परिमलः सद्धर्षणोत्पन्नो जनमनोहरो गन्धो यस्मिन् तादृशः 'विमर्दोत्थे परिमल गन्धे जनमनोहर' इत्यमर.। अनेन सुगन्धित्वं सूचितम्। विमलेति, विमर निर्मले तटे निपतनेन जर्जरायमाणः चूर्ण्यमानो यो निर्झरः सलिलप्रवाहः 'वारि प्रवाहो निर्झरो झर' इत्यमरः। तस्माद् उत्थित उपरिगतो य. शिशिराण शीताना शीकराणा जलकणानाम् 'शीकरोऽम्बुकण· स्मृत.' इत्यमरः आसार धारासम्पात. 'धारासम्पात आसार' इत्यमर:। तं वहति तच्छील., इत्यने शीतलत्वं वायोराक्षिप्तम् प्रथमेति' प्रथम आदिमः नूतन इत्यर्थ। यः सङ्गमः पति संयोग. तेन उत्कण्ठिताया. सञ्जातोत्कण्ठाया प्रियायाः कान्ताया. कण्ठग्रह इ कण्ठालिङ्गनमिव मार्गपरिश्रमं पथखेदम् अपनयन् दूरीकुर्वन् मलयमारुत मलयपवन. प्रियवयस्यं प्रियश्चासौ वयस्य तं भवन्तमित्यर्थ.। रोमाञ्चयति सञ्जातरोमाञ्चं करोति हर्षयतीत्यर्थ.। उपमालङ्कारः।

नायकः। [निरूप्य सविस्मयम्] अये! प्राप्ता एव वयं मलय पर्वतम्। [समन्तादवलोक्य] अहो! रामणीयकमस्य। तथाहि।

निरूप्येति सविस्मयं साश्चर्यं निरूप्य दृष्ट्वा आहेति शेषः। समन्तात् चतसृ दिक्षु अवलोक्य दृष्ट्वा, अस्य मलयपर्वतस्य रामणीयकं मनोहरत्वमित्यर्थः।

माद्यद्दिग्गजगण्डभित्तिकषणैर्भग्नस्रवच्चन्दनः
क्रन्दत्कन्दरगह्वरो जलनिधेरास्फालितो वीचिभि·।

पादालक्तकरक्तमौक्तिकशिलः सिद्धाङ्गनानां गतै-
र्दृष्टोऽयं मलयाचलः किमपि मे चेतःकरोत्युत्सुकम् ॥ ८ ॥

माद्यदिति।

पदच्छेदः।

माद्यद्दिग्गजगण्डभित्तिकषणैः ( ३।३ करणप० ) भग्नस्रवच्चन्दनः ( १।१ कर्तृ-विशे० ) क्रन्दत्कन्दरगह्वर. ( १।१ कर्तृविशे० ) जलनिधेः ( ६।१ ) आस्फालितः ( १।१ कर्तृविशे० ) वीचिभिः ( ३।३ ) पादालक्तकरक्तमौक्तिकशिल· ( १।१ कर्तृ-विशे० ) सिद्धाङ्गनानाम् ( ६।३ ) गतै. ( ३।३ ) दृष्ट. ( १।१ कर्तृविशे० ) अयम् ( १।१ कर्तृविशे० ) मलयाचलः ( १।१ कर्ता ) किम् ( अव्ययम् ) अपि अव्ययम् ) मे ( ६।१ ) चेतः ( २।१ कर्म ) करोति ( क्रिया ) उत्सुकम् २।१ कर्मविशेष )।

खण्डान्वय.—

अयं मलयाचलो मे मनः किमपि उत्सुकं करोति, कीदृशो मलयाचलः ? भग्नस्रवच्चन्दनः, कैः ? माद्यद्दिग्गजगण्डभित्तिकषणैः, पुन· कीदृशः ? क्रन्दत्क-न्दरगह्वरः कीदृश सन् ? आस्फालित सन् काभि· ? वीचिभिः, कस्य ? जल निधे·, पुन· कीदृश· ? पादालक्तकरक्तमौक्तिकशिल·, कै ? गतै, कासाम् ? सिद्धाङ्ग-नानाम्, पुन कीदृश ? दृष्टः।

व्याख्या—

मलयपर्वतस्य रामणीयकमेव वर्णयति—माद्यदिति। माद्यन्तो हृष्यन्तः हर्षा-र्थकस्य दैवादिकमदीधातो शतृप्रत्ययः शमामष्टाना दीर्घः श्यनि इति दीर्घः। ये दिग्गजा दिग्हस्तिनस्तेषां गण्डा कपोला भित्तय इव तासा कर्षणै· घर्षणैः भग्नेति, भग्नानि आमर्दितानि अतएव स्रवन्ति द्रवीभवन्ति चन्दनानि चन्दनवृक्षा यत्र सः, जलनिधे समुद्रस्य वीचिभिः ऊर्मिभि· आस्फालितः ताडित·, अतएव क्रन्ददिति, क्रन्दन्त क्रोशन्त कन्दरा दर्य· "दरी तु कन्दरो वा स्त्री" त्यमरः। एव गह्वराणि गुहा यस्य स, सिद्धाङ्गनाना सिद्धा देवयोनिविशेषा तेषाम् अङ्गनाना कान्तानां गतैर्गतिभिः। पादेति। पादाना चरणानाम् आलक्तकेन लाक्षारागेण रक्ता लोहित-वर्णा मौक्तिकशिला यत्र स, एतादृशो मलयाचलो मलयपर्वतो दृष्टोऽवलोकितः सन् किमपि मे मम चेतो मानसम् उत्सुकं सञ्जातोत्कण्ठं करोति ॥ ८ ॥

शार्दूलविक्रीडित वृत्तम्। उपमानुप्राणितः स्वभावोक्त्यलङ्कार। "स्वभावोक्तिस्तु डिम्भादे स्वक्रियारूपवर्णनम्" इति लक्षणात् ॥

तदेतस्मादस्य वासयोग्यं किञ्चिदाश्रमपदं निरूपयावः।

---

१ मदस्राविण इति जीवानन्द रूपसिद्धि ग्रन्थयाः।

विदूषकः । एव्वं करेह्म । [ अग्रतः स्थित्वा ] एदु भवं । [ आरोहणं नाट्यतः ] । ( क )

तदिति ।

पदच्छेदः—

तत् ( १।१ ) एहि ( क्रिया ) अत्र ( अव्ययम् ) आरुह्य ( ल्यबन्तम् ) वासयोग्यम् ( २।१ कर्मविशे ) किम् ( २।१ कर्मविशे. ) आश्रमपदम् ( २।१ कर्म ) निरूपयावः ( क्रिया ) ।

व्याख्या—

मलयस्य रोचनीयत्वं प्रदर्श्य स्थानान्वेषणार्थमाह—तदिति । तत्तस्मात्कारणात् एहि आगच्छ, अत्र मलयपर्वते अधिकरणविवक्षात्वं नकर्मत्वम् । आरुह्य उपरि गत्वा किञ्चिद् वासयोग्यं निवासोचितम् आश्रमपदम् आश्रमाय पदं स्थान निरूपयावः अन्वेषयाव. पश्याव इत्यर्थः ॥

नाट्यत इति । नाटकरीत्या दर्शयत इत्यर्थः ॥

नायकः । [ दक्षिणाक्षिस्पन्दनं सूचयन् ] अये ।

[ दक्षिणाक्षिस्पन्दनं दक्षिणस्य अक्ष्णो नयनस्य स्पन्दन स्फुरणं सूचयन् व्यञ्जयन् ] नायक आहेति शेष ।

दक्षिणं स्पन्दते चक्षुः फलाकाङ्क्षा न मे क्वचित् ।
न च मिथ्या मुनिवचः कथयिष्यति किं न्विदम् ॥ ६ ॥

दक्षिणमिति ।

पदच्छेदः—

दक्षिणम् ( १।१ कर्तृविशे. ) स्पन्दते ( क्रिया ) चक्षु ( १।१ कर्तृ ) फलाकाङ्क्षा ( १।१ ) न ( अव्ययम् ) मे ( ६।१ ) क्वचित् ( अव्ययम् ) न ( अव्ययम् ) च ( अव्ययम् ) मिथ्या ( अव्ययम् ) मुनिवच ( १।१ ) कथयिष्यति ( क्रिया ) किम् ( २।१ कर्म ) नु ( अव्ययम् ) इदम् ( १।१ कर्तृविशे. )

व्याख्या—

किमाह—दक्षिणमिति । दक्षिणं सव्यं चक्षुः नेत्रं स्पन्दते किञ्चिच्चलति । स्फुरतीत्यर्थ । मे मम फलाकाङ्क्षा "दक्षिणाङ्गस्फुरणं पुंस. शुभफलदम्" इत्येव फलस्य आकाङ्क्षा अभिलाषा क्वचित् कस्मिंश्चित्पदार्थे नास्ति । मुनिवचो मुने शकुनशास्त्रकारस्य वचो वचनं च मिथ्या असत्यं नास्ति, अत इदं दक्षिण नेत्रस्फुरणं नु ( वितर्के ) किं कथयिष्यति सूचयिष्यतीत्यर्थ । अनुष्टुब् वृत्तम् ॥ ६ ॥

विदूषकः । भो वअस्स ! अवस्समासण्णं दे पिअं णिवेदेदि । ( ख )

---

( क ) एवं कुर्व. । एतु भवान् ।

( ख ) भो वयस्य ! अवश्यमासन्नं ते प्रियं निवेदयति ।

अवश्यमिति । अवश्यम् आसन्नं समीपवर्ति ते तव प्रियं हितं निवेदयति कथयति ।

**नायकः । एवं नाम यथाह भवान् ।**

एवमिति ।

पदच्छेदः—

एवम् ( अव्ययम् ) नाम ( अव्ययम् ) यथा ( अव्ययम् ) आह ( क्रिया ) भवान् ( १।१ कर्ता ) ।

व्याख्या—

एवं नाम सम्भावनायाम् । एवमेव सम्भाव्यत इत्यर्थः । यथा येन प्रकारेण भवान् विदूषक आह वदति ॥

**विदूषकः । [ विलोक्य ] भो वअस्स पेक्ख पेक्ख । एदं क्खु सविसेसघणसिणिद्धपादवविसोहिअं सुरहिहविग्गन्धगब्भिणुद्दामधूमणिग्गमं अणुव्विग्गसुहणिसण्णसावअगणं तवोवणं विअ लक्खीअदि । ( क )**

एतदिति ।

पदच्छेदः—

एतत् ( १।१ कर्मविशे. ) खलु ( अव्ययम् ) सविशेषघनस्निग्धपादपविशोभितम् ( १।१ कर्मविशे. ) सुरभिहविर्गन्धगर्भितोद्दामधूमनिर्गमम् ( १।१ कर्मविशे. ) अनुद्विग्नसुखनिषण्णशावकगणम् ( १।१ कर्मविशे. ) तपोवनम् ( १।१ कर्म ) इव ( अव्ययम् ) लक्ष्यते ( क्रिया ) ।

खण्डान्वयः—

एतत् खलु तपोवनमिव लक्ष्यते, कीदृशं तपोवनम् ? सविशेषघनस्निग्धपादपविशोभितम्, पुनः कीदृशम् ? सुरभिहविर्गन्धगर्भितोद्दामधूमनिर्गमम्, पुनः कीदृशम् ? अनुद्विग्नसुखनिषण्णशावकगणम् ।

व्याख्या—

विदूषकोऽग्रतो दृष्ट्वा तपोवनं सम्भावयति—एतदिति । अस्मिन् गद्ये मयेति कर्तृपदमध्याहार्यम् । सविशेषेति । सविशेषम् अत्यन्तं यथास्यात्तथा घनैः सान्द्रैः स्निग्धैः सरसैः पादपैः वृक्षैः चन्दनादिभिरित्यर्थः । विशोभितं विभूषितम् । " सुरभीति" सुरभि शोभनगन्धयुक्तं यद् हविर्घृतम् "सुरभिर्घ्राणतर्पणः । इष्टगन्धः

( क ) भो वयस्य । प्रेक्षस्व प्रेक्षस्व । एतत् खलु सविशेषघनस्निग्धपादपविशोभितम् सुरभिहविर्गन्धगर्भितोद्दामधूमनिर्गमम् अनुद्विग्नसुखनिषण्णशावकगणं तपोवनमिव लक्ष्यते ।

सुगन्धिः स्या" दित्यमरः तस्य गन्धेन गर्भितो मिलित उद्दाम उत्कटो यो धूमस्तस्य निर्गमो निष्क्रमणं यस्मात् तत् । अनुद्विग्नेति । अनुद्विग्नानां निर्भयानाम् अत एव सुखनिषण्णानां सुखेन निषण्णानाम् उपविष्टानां शावकानां मृगशिशूनां गणः समूहो यत्र तादृशं तपोवनमिव लक्ष्यते प्रतीयते। उत्प्रेक्षालङ्कारः "भवेत्सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना" इति लक्षणात् ॥

**नायकः । सम्यगुपलक्षितम् । तपोवनमेवैतत् । कुतः ।**

सम्यगिति, सम्यक् सुष्ठु उपलक्षितं ज्ञातम् ।

**वासोऽर्थे दययेव नातिपृथवः कृत्तास्तरूणां त्वचो**
**भग्नालक्ष्यजरत्कमण्डलु ततः स्वच्छं पयो नैर्झरम् ।**
**दृश्यन्ते त्रुटितोज्झिताश्च वटुभिर्मौञ्ज्यः क्वचिन्मेखला**
**नित्याकर्णतया शुकेन च पदं साम्नामिदं पठ्यते ॥ १० ॥**

वासोऽर्थ इति ।

पदच्छेदः—

वासोऽर्थे ( ७।१ ) दयया ( ३।१ ) इव ( अव्ययम् ) न ( अव्ययम् ) अतिपृथवः ( १।३ त्वग्विशेष. ) कृत्ताः ( १।३ त्वग्विशे. ) तरूणाम् ( ६।३ ) त्वच ( १।३ कर्मप. ) भग्नालक्ष्यजरत्कमण्डलु ( १।१ कर्मवि. ) ततः (तसिलन्तम्) स्वच्छम् ( १।१ कर्मविशे. ) पयः ( १।१ कर्म ) नैर्झरम् ( १।१ कर्मविशे. ) । दृश्यन्ते ( क्रिया ) त्रुटितोज्झिताः ( १।३ निष्ठान्तं कर्मविशे. ) च ( अव्ययम् ) वटुभिः ( ३।३ निष्ठान्तकर्तृपदम् ) मौञ्ज्यः ( १।३ कर्मविशे.) क्वचित् ( अव्ययम् ) मेखलाः ( १।३ कर्म ) । नित्याकर्णतया ( ३।१ हेतु ) शुकेन ( ३।१ कर्त्रा ) च ( अव्ययम् ) पदम् ( १।१ कर्म ) साम्नाम् ( ६।३ ) इदम् ( १।१ कर्मविशे. ) पठ्यते ( क्रिया ) ।

खण्डान्वय.—

क्वचित् तरूणां त्वचो दृश्यन्ते, कीदृश्यस्त्वचः न अतिपृथवः पुन कीदृश्यः ? दययेव कृत्ताः, किमर्थे ? वासोऽर्थे । ततः क्वचित् पयो दृश्यते, कीदृश पय ? भग्नालक्ष्यजरत्कमण्डलु, पुनः कीदृशम् ? स्वच्छम्, पुन कीदृशम् ? नैर्झरम् । क्वचित् मेखला दृश्यन्ते, कीदृश्यो मेखलाः त्रुटितोज्झिता , कैः ? वटुभि , पुन कीदृशाः ? मौञ्ज्यः । शुकेन च इदं साम्ना पदं पठ्यते, कया ? नित्याकर्णतया ।

व्याख्या—

तपोवनं निश्चित्य तत्सत्त्वे हेतून् वर्णयति—" वासोऽर्थ इति " दृश्यन्त इति क्रियायाः पादत्रयेण सम्बन्धः । तथाहि क्वचिद् वासोर्थे परिधाननिमित्तं दयया कृपयेव कृत्ताः छिन्ना अतएव नातिपृथवः नातिस्थूलाः तरूणां द्रुमाणां त्वचो वल्कलानि दृश्यन्ते, ततः तस्मादग्रे मग्नेति, मग्न आप्लवितो जलाभ्यन्तर्गत

इत्यर्थः। तथापि आलक्ष्य आसमन्तात् लक्ष्य प्रतीयमानो जरत् ? जीर्णताकमण्डलुर्मुनीनां जलपात्रविशेषो यस्मिन् तादृशम्, अतएव स्वच्छं निर्मलं नैर्झरं निर्झरसम्बन्धि पयो जलं—दृश्यते, कचिच्च प्रदेशे बटुभिर्ब्रह्मर्षिकुमारैः त्रुटिं तेति, पूर्वं त्रुटिताः पश्चादुज्झिताः छिन्नाः 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेनेति समासः' मौञ्ज्यो मुञ्जनिर्मिता मेखलाः काञ्चयो दृश्यन्ते, नित्याकर्णतया निरन्तरश्रवणतया हेतुना शुकेन कीरेण च इदं श्रूयमाणं साम्ना सामवेदानां पदं खण्डविशेषः पठ्यतेऽधीयते॥ १ शार्दूलविक्रीडितं वृत्तम्। स्वभावोक्तिः।

**तदेहि प्रविश्य अवलोकयावः। [ प्रवेशं नाटयतः ]**

**नायकः। [ सविस्मयं विलोक्य ] अहो ! नु खलु मुदितमुनिजनप्रविचार्यमाणसन्दिग्धवेदवाक्यविस्तरस्य पठद्वटुच्छिद्यमानार्द्रार्द्रसमिधस्तापसकुमारिकापूर्यमाणबालवृक्षालवालस्य प्रशान्तरमणीयता तपोवनस्य।**

मुदितेति।

पदच्छेद.—

अहो नु खलु ( अव्ययत्रयम् ) मुदितमुनिजनप्रविचार्यमाणसन्दिग्धवेदवाक्यविस्तरस्य [ ६।१ सम्बन्धविशेषणम् ] पठद्वटुच्छिद्यमानार्द्रार्द्रसमिधः [ ६।१ सम्बन्धविशे. ] तापसकुमारिकापूर्यमाणबालवृक्षालवालस्य [ ६।१ सम्बन्धविशे. ] प्रशान्तरमणीयता [ १।१ सम्बन्धिनी ] तपोवनस्य [ ६।१ सम्बन्ध. ]

खण्डान्वयः—

तपोवनस्य प्रशान्तरमणीयता अहो नु खलु आश्चर्यकारिणी अस्तीति शेषः। कीदृशस्य तपोवनस्य ? मुदितमुनिजनप्रविचार्यमाणसन्दिग्धवेदवाक्यविस्तरस्य, पुनः कीदृशस्य ? पठद्वटुच्छिद्यमानार्द्रार्द्रसमिधः, पुनःकीदृशस्य ? तापसकुमारिकापूर्यमाणबालवृक्षालवालस्य॥

व्याख्या—

नायकस्तपोवनस्य रामणीयकत्वं वर्णयन्नाह—"अहो इति"। अहो आश्चर्ये नु वितर्के मुदितेति, मुदितैः प्रसन्नैर्मुनिजनैः प्रविचार्यमाणाना प्रकर्षेण विचार्यमाणाना सन्दिग्धानाम् अनिश्चिताना वेदवाक्याना विस्तरो विस्तारो यत्र तादृशस्य, "पठदिति." पठन्तो ये बटवो मुनिबालास्तैः छिद्यमाना भिद्यमानाः आर्द्रार्द्रा अतिस्निग्धा समिधो यज्ञार्थमानीतकाष्ठानि यत्र तादृशस्य, "तापसेति" तापसाना तपस्विना कुमारिकाभि कन्यकाभि आपूर्यमाण आभ्रियमाणः बालवृक्षाणाम् आलवालः सलिलधारणार्थं मृन्मयवेष्टनं यत्र तादृशस्य तपोवनस्य प्रशान्तरमणीयता प्रशान्तं चित्तशान्तिप्रदं यद् रमणीयं तस्य भावः प्रशान्तरमणीयता 'भावे तल्' अस्तीति शेषः॥ स्वभावोक्तिः॥

इहहि—

मधुरमिव वदन्तः स्वागतं भृङ्गशब्दै-
र्नतिमिव फलनम्रैः कुर्वतेऽमी शिरोभिः ।
मम ददत इवार्घ्यं पुष्पवृष्टिं किरन्तः
कथमतिथिसपर्य्यां शिक्षिताः शाखिनोऽपि ॥ ११ ॥

इहेति । हि यतः इहास्मिन् तपोवने ।

मधुरमिति ।

पदच्छेदः—

मधुरम् ( २।१ शत्रन्तकर्मविशे. ) इव ( अव्ययम् ) वदन्तः ( १।३ शत्रन्तं कर्तृविशे ) स्वागतम् ( २।१ शत्रन्तकर्म ) भृङ्गशब्दैः ( ३।३ करणम् )। नतिम् ( २।१ कर्म ) इव ( अव्ययम् ) फलनम्रैः ( ३।३ करणविशे. ) कुर्वते । ( क्रिया ) अमी ( १।३ कर्तृविशे ) । शिरोभिः ( ३।३ करणम् ) मम ( ६।१ ) ददते, ( क्रिया ) इव ( अव्ययम् ) अर्घ्यम् ( २।१ कर्म ) पुष्पवृष्टिम् ( २।१ शत्रन्तकर्म ) किरन्तः ( १।३ शत्रन्तं कर्तृविशे. ) कथम् ( अव्ययम् ) अतिथिसपर्याम् ( २।१ निष्ठान्तकर्म ) शिक्षिताः ( निष्ठान्तक्रिया ) शाखिन· ( १।३ कर्तृपदम् ) अपि ( अव्ययम् ) ॥

खण्डान्वयः—

कथं शाखिनोऽपि अतिथिसपर्यां शिक्षिताः, कथं ज्ञायते ? यत., अमी शिरोभिः नतिमिव कुर्वते, कीदृशैः शिरोभिः ? फलनम्रै·, किं कुर्वन्तः ? स्वागतमिव वदन्तः, कीदृशं स्वागतम् ? मधुरम् , कैः ? भृङ्गशब्दैः पुनः कथं ज्ञायते ? यत·, मम अर्घ्यमिव ददते, किं कुर्वन्तः ? पुष्पवृष्टिं किरन्तः ॥

व्याख्या—

इह तपोवनेऽचेतनानामपि प्रशान्तत्वं वर्णयन्नाह—"मधुरमिति" । अमी शाखिनो भृङ्गशब्दै भ्रमरकूजितैः मधुरं सरलं स्वागतं शोभनागतमिव वदन्त. कथयन्तः सन्तः फलनम्रैः फलनतैः शिरोभिः शिखरैः नतिं प्रणाममिव कुर्वते, पुष्पवृष्टिं पुष्पवर्षणं किरन्तः क्षिपन्तः मम अर्घ्यं ददत इव समर्पयन्तीव ॥ ११ ॥

मालिनीवृत्तम् "ननमयययुतेयं मालिनी भोगिलोकै" इति लक्षणात्। उत्प्रेक्षालङ्कारः ॥ लक्षणमुक्तं प्राक् ॥

तन्निवासयोग्यमिदं तपोवनम् मन्ये भविष्यतीह वसतामस्माकं निर्वृतिः ।

तदिति, ।

पदच्छेदः—

तत् ( १।१ ) निवासयोग्यम् ( २।१ कर्मविशे. ) इदम् ( २।१ कर्मविशे. )

तपोवनम् ( २।१ कर्म ) मन्ये ( क्रिया ) । भविष्यति ( क्रिया ) इह ( अव्ययम् ) वसताम् (६।३ सम्बन्धविशे) अस्माकम् (६।३ सम्बन्धः) निर्वृतिः (१।१ कर्त्री)।

व्याख्या—

तत्तस्मात्कारणात् निवासयोग्यं निवासोचितम् इदं तपोवनं मन्ये सम्भावयामि, इह अस्मिन् तपोवने वसता निवासं कुर्वताम् अस्माकं निर्वृतिः सन्तुष्टिर्भविष्यति ॥

विदूषकः। भो वअस्स ! किं क्खु एदे ईसिवलिअकन्धरा णिच्चलमुहावसरन्तदरदलिअदब्भकवला समुण्णामिददिण्णककण्णा सुहणिमीलिदलोअणा आअण्णन्ता विअ हरिणा लक्खीअन्ति।(क)

किमिति।

पदच्छेदः—

किम् ( २।१ शत्रन्तकर्म ) खलु ( अव्ययम् ) एते ( कर्मविशे. ) ईषद्वलित-कन्धरा ( १।३ कर्मविशे ) निश्चलमुखापसरद्दरदलितदर्भकवलाः ( १।३ कर्मविशे ) समुन्नामितदत्तैककर्णाः ( १.३ कर्मविशे. ) सुखनिमीलितलोचनाः ( १।३ कर्मविशे ) आकर्णयन्त· ( १।३ शत्रन्तं कर्मविशे ) इव ( अव्ययम् ) हरिणाः ( १।३ कर्म-पदम् ) लक्ष्यन्ते ( क्रिया ) ॥

खण्डान्वयः—

एते खलु किम् आकर्णयन्त इव हरिणाः लक्ष्यन्ते ? कीदृशा हरिणाः ? ईषद्व-लितकन्धराः, पुन· कीदृशा.? निश्चलमुखापसरद्दरदलितदर्भकवलाः, पुनः कीदृशाः ? समुन्नामितदत्तैककर्णा·, पुनः कीदृशा. ? सुखनिमीलितलोचनाः ॥

व्याख्या—

हरिणाना निश्चेष्टत्वं विज्ञाय पृच्छति—"किमिति । ईषदिति ईषत् किञ्चिद् वलिता तिर्यक्कृता. कन्धरा ग्रीवा यैस्तादृशा·, निश्चलेति, निश्चलाद् निश्चेष्टाद् मुखाद् अपसरन्तो बहिर्निष्क्रमन्तोदरम् ईषद् यथास्यात्तथा दलिताः चर्विता दर्भ-कवला कुशग्रासा येषा तादृशा "ग्रासस्तु कवल पुमान्" इत्यमरः।" समुन्ना-मितेति । समुन्नामित· प्रह्वीकृतो दत्ताऽवहितश्च एककर्णो यैस्तादृशा·, अत एव "सुखनिमीलितलोचनाः' सुखेन निमीलितानि लोचनानि नयनानि यैस्तादृशा एते हरिणा मृगा· किं खलु आकर्णयन्तः श्रृण्वन्त इव लक्ष्यन्ते प्रतीयन्ते ? ॥

नायकः। [ कर्णं दत्वा ] सखे ! सम्यगुपलक्षितम्।

तथाहि—

स्थानप्राप्तावधानं प्रकटितसमतामन्द्रतारव्यवस्था-

---

( क ) भो वयस्य किं खल्वेते ईषद्वलितकन्धरा निश्चलमुखापसरद्दरदलित-दर्भकवला. समुन्नमितदत्तैककर्णाः सुखनिमीलितलोचना आकर्णयन्त इव हरिणा लक्ष्यन्ते।

निर्ह्रादिन्या विपञ्च्या मिलितमलिरुतेनेव तन्त्रीस्वरेण।
एते दन्तान्तरालस्थिततृणकवलच्छेदशब्दं नियम्य
व्याजिह्माङ्गाः कुरङ्गाः स्फुटललितपदं गीतमाकर्णयन्ति ॥१२॥

सख इति, हे सखे ? मित्र ? सम्यक् शोभनम् उपलक्षितं ज्ञातम्।
स्थानेति।

पदच्छेदः—

स्थानप्राप्तावधानम् ( क्रियाविशे. ) प्रकटितसमतामन्द्रतारव्यवस्थानिर्ह्रादिन्या ( ६।१ सम्बन्धविशे. ) विपञ्च्याः ( ६।१ सम्बन्ध. ) मिलितम् ( क्तान्तं कर्म-विशे. ) अलिरुतेन ( ३।१ स्वरोपमानम् ) इव ( अव्ययम् ) तन्त्रीस्वरेण ( ३।१ क्तान्तकर्तृप. ) एते ( १।३ कर्तृविशे. ) दन्तान्तरालस्थिततृणकवलच्छेदशब्दम् ( २।१ ल्यबन्तकर्म ) नियम्य ( ल्यबन्तम् )। व्याजिह्माङ्गाः ( १।३ कर्तृविशे. ) कुरङ्गाः ( १।३ कर्तृपदम् ) स्फुटललितपदम् ( २।१ कर्मविशे. ) गीतम् (२।१कर्म) आकर्णयन्ति ( क्रिया )।

खण्डान्वयः—

एते कुरङ्गा गीतम् आकर्णयन्ति, कीदृशाः कुरङ्गा ? व्याजिह्माङ्गाः, किंकृत्वा ? दन्तान्तरालस्थिततृणकवलच्छेदशब्दं नियम्य, कीदृशं गीतम् ? विपञ्च्याः तन्त्रीस्वरेणामिलितम्, केनेव ? अलिरुतेनेव, कीदृश्या विपञ्च्याः ? प्रकटितसमता-मन्द्रतारव्यवस्थानिर्ह्रादिन्या, पुनः कीदृशं गीतम् ? स्फुटललितपदम्। कथम् ? स्थानप्राप्तावधानम्।

व्याख्या—

कुरङ्गाः किञ्चिच्छृण्वन्त्येवेति निश्चाययति स्थानेति ' व्याजिह्माङ्गा व्याजिह्मानि निश्चलानि अङ्गानि शीर्षादीनि येषां तादृशा एते कुरंगा मृगा दन्तेति, दन्तानाम् अन्तराले मध्यप्रदेशे स्थिता ये तृणकवला घासग्रासाः तेषां छेदशब्दं चर्वणशब्दं नियम्य निरुध्य प्रकटितेति प्रकटिता स्फुटीकृता समतया साम्येन 'मन्द्रो गम्भीरध्वनिः तारोऽत्युच्चैर्ध्वनिः, तयोर्या व्यवस्था मर्यादा तया निर्ह्रादिन्या मधुरं ध्वनन्त्या विपञ्च्या सप्ततन्त्रीभिः परिवादिन्या वीणायाः 'विपञ्ची सा सा तु तन्त्रीभिः सप्तभिः परिवादिनीत्यमरः ' तन्त्रीस्वरेण तन्त्रीध्वनिना अलिरुतेन भ्रमरगुञ्जितेनेव मिलितं युक्तम्, स्फुटललितपदं स्फुटानि स्पष्टानि ललितानि मधुराणि च पदानि यस्मिन् तादृशं गीतं गानं स्थानेति स्थाने समुचितविश्रामे प्राप्तम् अवधानं सावधानत्वं यत्र तद् यथा स्यात्तथा आकर्णयन्ति शृण्वन्ति ॥ १२ ॥

स्रग्धरावृत्तम्। उपमानुप्राणितः परिकरालङ्कारः "उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः" इति लक्षणात् ॥

विदूषकः। भो वअस्स ! को उण एसो तवोवणे गाअदि। (क)

नायकः। यथैताः कोमलाङ्गुलितलाभिहन्यमानाः स्फुटं क्वणन्ति तन्त्र्यः तथा काकलिप्रधानं गीयत इति तर्कयामि। [ अङ्गुल्यग्रेणाग्रतो निर्दिशन् ] अस्मिन्नायतने देवतामाराधयन्ती काचिद्दिव्या योषिदुपवीणयति।

पदच्छेदः—

यथेति यथा ( अव्ययम् ) एताः ( १।३ कर्तृविशे. ) कोमलांगुलितलाभिहन्यमाना. ( १।३ कर्तृविशे. ) स्फुटम् ( क्रियाविशे. ) क्वणन्ति ( क्रियापद. ) तन्त्र्य. ( १।३ कर्तृपदम् ) तथा ( अव्ययम् ) काकलीप्रधानम् ( क्रियावि. ) गीयते ( क्रिया ) इति ( अव्ययम् ) तर्कयामि ( क्रिया ) । अंगुल्यग्रेण ( ३।१ करणम् ) अग्रत ( तद्धितान्तम् ) निर्दिशन् ( १।१ कर्तृविशे. शत्रन्तम् ) अस्मिन् ७।१ अधिकरणविशे. ) आयतने ( ७।१ अधिकरणम् ) देवताम् ( २।१ ण्यन्तकर्म ) आराधयन्ती ( १।१ शत्रन्तं कर्तृविशे. ) का ( १।५ कर्तृविशे. ) चिद् ( अव्ययम् ) दिव्या ( १।१ कर्तृविशे. ) योषित् ( १।१ कर्तृपदम् ) उपवीणयति ( क्रिया )।

व्याख्या—

गायकमनुमिनोति यथेति "यथा येन प्रकारेण एताः श्रूयमाणा. कोमलेति" कोमलानि मृदूनि यानि अङ्गुलीना तलानि तैः अभिहन्यमानाः ताड्यमाना· तन्त्र्य वितत्तनिर्मिता· स्फुट स्पष्टं यथा स्यात्तथा क्वणन्ति ध्वनन्ति तथा तेन प्रकारेण काकलीप्रधानं काकल्या सूक्ष्मकलस्य "काकली तु काले सूक्ष्मे इत्यमर." प्रधान यत्र तद् यथास्यात्तथा गीयते गानं क्रियते इत्येवं तर्कयामि अनुमिनोमि। [ अङ्गुल्यग्रेण अङ्गुल्या. तर्जन्या अग्रेण अग्रभागेन अग्रता निर्दिशन् दर्शयन् आहेति शेष: ] अस्मिन् आयतने देवमन्दिरे देवताम् आराधयन्ती ध्यायन्ती काचिद् अज्ञातनामधेया दिव्या दिविभवा योषित् स्त्री उपवीणयति वीणया उपगायति "सत्यापपाशेत्यादिना धात्वर्थे णिच्"

विदूषकः भो वअस्स ! एहि अह्मेवि देवदाअदणं पेक्खह्म। (ख)

एहीति एहि आगच्छ आवा नायकविदूषकावपि देवतायतनं देवतामन्दिर प्रेक्षावहे पश्याव।

नायकः। वयस्य ! साधूक्तं खलु भवता। वन्द्याः खलु देवताः। [ उपसर्पन् सहसा स्थित्वा ] वयस्य ! कदाचिद्द्रष्टुमनर्होऽयं जनो

---

( क ) भो वयस्य ! कः पुनरेष तपोवने गायति।

( ख ) भो वयस्य ! एहि आवामपि देवतायतनं प्रेक्षावहे।

भवति । तदावां तमालगुल्मान्तरितौ पश्यन्ताववसरं प्रतिपालयावः ।
[ तथा कुरुतः ] ।

साध्विति"

पदच्छेदः—

साधु ( १।१ कर्म ) उक्तम् ( क्तान्तम् ) खलु ( अव्ययम् ) भवता ( ३।१ कर्त्रा ) वन्द्याः ( १।३ ण्यदन्तम् ) खलु ( अव्ययम् ) देवताः ( १।३ ) ।[ ( उपसर्पन् ( १।१ शत्रन्तम् ) सहसा ( अव्ययम् ) स्थित्वा ( क्त्वान्तम् ) ] वयस्य ? ( सम्बोधनम् ) कदाचित् ( अव्ययम् ) द्रष्टुम् ( तुमुन्नन्तम् ) अनर्हः ( १।१ जनविशे, ) अयम् ( १।१ जनविशे. ) जनः ( १।१ कर्ता ) भवति ( क्रिया ) । तत् ( १।१ ) आवाम् ( १।२ कर्त्तारौ ) तमालगुल्मान्तरितौ ( १।२ कर्तृविशे ) पश्यन्तौ (१।२) शत्रन्तं कर्तृविशे.) अवसरम् (२।१ कर्म) प्रतिपालयाव· (क्रिया) ।

व्याख्या—

देवतायतनप्रेक्षणे सम्मतिमाह साध्विति भवता त्वया विदूषकेण साधु शोभनम् उक्तम् ' यतो देवता वन्द्या वन्दनीयाः खलु, ( उपसर्पन् समीपं गच्छन् सहसा अतर्कितम् ' अतर्किते तु सहसा स्यादित्यमरः ' स्थित्वा गतिं निरुध्येत्यर्थः आहेति शेषः ) वयस्य मित्र ? । कदाचित् अयं जन इयं कान्तेत्यर्थः द्रष्टुम् अवलोकितुम् अनर्हः अयोग्यो भवति । तत्तस्माद्धेतोः आवां द्वौ तमालगुल्मान्तरितौ तमालानां तदाख्यतरूणां गुल्मैः स्तम्बैः ' गुल्मः सेनाघट्टभिदो सैन्यरक्षणरुग्भिदोः । स्तम्ब इति मेदिनी ' ' गुल्मा रुक्स्तम्बसेनाश्चेत्यमरश्च ' अन्तरितौ गोपितौ अन्येनादृश्यमानावित्यर्थः पश्यन्तौ वीक्षमाणौ सन्तौ अवसरम् प्रस्तावं प्रसङ्गमितियावत् ' प्रस्तावः स्यादवसर इत्यमरः ' प्रतिपालयावः प्रतीक्षावहे ।

(ततः प्रविशति भूमावुपविष्टा वीणां वादयन्ती मलयवती चेटी च ) ।

' तत इति ' ततः तदनन्तरं भूमौ पृथिव्यां नत्वासने उपविष्टा वीणा विपञ्ची वादयन्ती ध्वनयन्ती मलयवती तन्नाम्नी नायिका चेटी परिचारिका च प्रविशति प्रवेशं करोति ।

नायिका गायति—

उत्फुल्लकमलकेसरपरागगौरद्युते ! मम हि गौरि ?
अभिवाञ्छितं प्रसिध्यतु भगवति ! युष्मत्प्रसादेन ॥ १२ ॥

उत्फुल्लेति"

पदच्छेदः—

उत्फुल्लकमलकेसरपरागगौरद्युते ? ( सम्बोधनं गौरीविशे. ) मम ( ६।१ ) हि ( अव्ययम् ) गौरि ( सम्बोधनम् ) अभिवाञ्छितम् ( १।१ कर्तृ ) प्रसिध्यतु ( क्रिया ) भगवति ( सम्बोधनं गौरीविशे. ) युष्मत्प्रसादेन ( ३।१ करणम् )

खण्डान्वयः—

हे गौरि ? मम अभिवाञ्छितं प्रसिध्यतु, केन ? युष्मत्प्रसादेन, कीदृशी त्वं हे गौरि ? उत्फुल्लकमलकेसरपरागगौरद्युते ? पुनः कीदृशी ? भगवति।

व्याख्या—

मलयवती किं गायति तदाह—'उत्फुल्लेति' उत्फुल्लानि विकसितानि यानि कमलानि पद्मानि तेषां केसरेषु किञ्जल्केषु 'किञ्जल्कः केसरोऽस्त्रियामित्यमरः' यः परागो रजः तदिव गौरी गौरवर्णा द्युतिः कान्तिर्यस्याः 'शोभाकान्तिर्द्युतिश्छवि-रित्यमरः' तत्सम्बुद्धौ, हे भगवति ? ऐश्वर्यसमन्विते गौरि ? दुर्गे ? युष्मत्प्रसादेन युष्मत्प्रसन्नतया मम अभिवाञ्छितम् अभिलषितम् 'विद्याधरचक्रवर्ती मे पतिर्भूयादित्येवंरूपम्' प्रसिद्ध्यतु पूर्णीभवतु। हीति निरर्थकम्॥ १३॥ आर्यावृत्तम् 'यस्या पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये चतुर्थके पञ्चदश सार्या' इति लक्षणात्। उपमालङ्कारः।

**नायकः। [ कर्णं दत्त्वा ] वयस्य! अहो! गीतमहो! वाद्यम्।**

'अहो इति' अहो गीतम् आश्चर्यकारि गानमित्यर्थः, अहो वाद्यम् अपूर्वमेव वाद्यं वीणादिकमित्यर्थः।

**व्यक्तिर्व्यञ्जनधातुना दशविधेनाप्यत्र लब्धामुना**
**विस्पष्टो द्रुतमध्यलम्बितपरिच्छिन्नस्त्रिधायं लयः।**
**गोपुच्छप्रमुखाः क्रमेण यतयस्तिस्रोऽपि सम्पादिता-**
**स्तत्त्वौघानुगताश्च वाद्यविधयः सम्यक् त्रयो दर्शिताः॥१४॥**

व्यक्तिरिति।

पदच्छेदः—

व्यक्तिः (१।१ कर्म) व्यञ्जनधातुना (३।१ कर्ता) दशविधेन (३।१ कर्तृविशे.) अपि (अव्ययम्) अत्र (अव्ययम्) लब्धा (१।१ निष्ठान्तक्रिया) विस्पष्टः (१।१ लयविशे.) द्रुतमध्यलम्बितपरिच्छिन्नः (१।१ लयविशे.) त्रिधा (अव्ययम्) अयम् (१।१ लयविशे.) लयः (१।१ कर्ता)। गोपुच्छप्रमुखाः (१।३ कर्मविशे.) क्रमेण (३।१) यतयः (१।३ कर्म) तिस्रः (१।३ कर्मविशे.) अपि (अव्ययम्) सम्पादिताः (१।३ निष्ठान्तक्रिया)। तु (अव्ययम्) आतोद्यानुगताः (१।३ कर्मविशे.) च (अव्ययम्) वाद्यविधयः (१।३ कर्म) सम्यक् (क्रियाविशे.) त्रयः (१।३ कर्मविशे.) दर्शिताः (१।३ निष्ठान्तक्रिया)॥

खण्डान्वयः—

अत्र व्यञ्जनधातुनाऽपि व्यक्तिर्लब्धा, कीदृशेन व्यञ्जनधातुना ? अमुना, पुनः

कीदृशेन ? दशविधेन । अयं लयो विस्पष्टः कतिधा ? त्रिधा, कीदृशो लयः ? द्रुतमध्यलम्बितपरिच्छिन्नः, क्रमेण यतयः सम्पादिताः, कीदृश्यो यतयः ? गोपुच्छप्रमुखाः, कति ? तिस्रोऽपि, वाद्यविषयस्तु दर्शिताः, कीदृशा वाद्यविषयः आतोद्यानुगताः, कति ? त्रयः, कथम् ? सम्यक् ॥

व्याख्या—

गीतवाद्ययोः पूर्णशोभनत्वं दर्शयन्नाह व्यक्तिरिति । अमुना श्रोत्रविषयीकृतेन दशविधेन दशप्राकारिकेणापि व्यञ्जनधातुना व्यज्यन्ते स्वरा अनेनेति व्यञ्जन 'करणे ल्युट्' तादृशो यो धातुः सङ्गीतभेदस्तेन अत्र अस्मिन् विषये व्यक्तिः प्रकटता लब्धा प्राप्ता, द्रुतेति, द्रुतं शीघ्रोच्चरितत्वं मध्यं नातिशीघ्रं नातिमन्दमुच्चरितत्वं लम्बितं मन्दोच्चरितत्वं तै परिच्छिन्नः पृथक् पृथक् कृतः अयं त्रिधा उक्तप्रकारेण त्रिविधो लयः कालक्रिययोः साम्य "लय साम्यमित्यमर." । विस्पष्ट प्रकटितः । गोपुच्छप्रमुखा गोपुच्छप्रभृतय पूर्वं लघ्वी मध्ये दीर्घा पुन. क्रमेण लघुतां गता एवं गोपुच्छतुल्या. तिस्रः त्रिसङ्ख्याकाः यतय विश्रान्तयोऽपि क्रमेण सम्पादिताः प्रकाशिताः, आतोद्यानुगता आतोद्यं वीणादिकं वाद्य तदनुगता. तत्सङ्गताः त्रयः त्रिसङ्ख्यका. वाद्यविषयश्च वाद्यव्यापाराश्च सम्यक् शोभन दर्शिताः ॥ १४ ॥

शार्दूलविक्रीडितं वृत्तम् ।

**चेटी [ सप्रणयम् ] भट्टिदारिए ! चिरं क्खु वादअन्तिए कुदो ण परिस्समो अग्गहत्थाणं । [ क ]**

सप्रणयमिति ।

पदच्छेदः—

[ सप्रणयम् ( क्रियाविशेषणम् ) ] भर्तृदारिके ? ( सम्बोधनम् ) चिरम् ( अव्ययम् ) खलु ( अव्ययम् ) वादयन्त्याः ( ६।१ ) कुतः ( तसिलन्तम् ) न ( अव्ययम् ) परिश्रम. ( १।१ कर्ता ) अग्रहस्तानाम् ( ६।३ ) ।

व्याख्या—

सप्रणयं सविनयं चेटी वदतीति शेष, हे भर्तृदारिके ! राजपुत्रि ?" तत्सुता भर्तृदारिकेत्यमर." खलु प्रसिद्धौ चिरं दीर्घकालं वादयन्त्या वीणामिति शेष तव अग्रहस्तानां कोमलहस्ताना कुतः कस्मात्कारणात् न परिश्रमः खेद. ॥

**नायिका । [ साधिक्षेपम् ] हञ्जे ! कुदो मे देवीए पुरदो वीणं वादअन्तिए अग्गहत्थाणं परिस्समो । [ ख ]**

हञ्ज इति ।

( क ) भर्तृदारिके ! चिरं खलु वादयन्त्याः कुतो न परिश्रमोऽग्रहस्तानाम् ।

( ख ) हञ्जे ! कुतो मे देव्याः पुरतो वीणां वादयन्त्या अग्रहस्ताना परिश्रमः ।

पदच्छेद —

हञ्जे ( सम्बोधनम् ) कुतः ( तसिलन्तम् ) मे ( ६।१ ) देव्याः ( ६।१ ) पुरतः ( अव्ययम् ) वीणाम् ( शत्रन्तकर्म ) वादयन्त्याः ( ६।१ शत्रन्तम् ) अग्रहस्तानाम् ( ६।३ ) परिश्रमः ( १।१ )

व्याख्या—

चेटीवचनमाकर्ण्य नायिका साधिक्षेपं सतिरस्कारमाह हञ्जे इति। हे हञ्जे चेटि ! "हण्डेहञ्जेहलाऽऽह्वाने नीचा चेटीं सखीं प्रतीत्यमरः" देव्या गौर्याः पुरतोऽग्रतो वीणां वादयन्त्या शब्दयन्त्या मे मम अग्रहस्तानां परिश्रमः कुतः॥

**चेटी। भट्टिदारिए ! णं भणामि किं एदाए णिक्करुणाए पुरदो वाईदेण। जा एत्तिअं कालं कण्णआजणदुक्करेहिं णिअमोवासणेहिं आराधअन्तिए अज्जवि ण दे पसादं दंसेदि। [ क ]**

भर्तृदारिक इति।

पदच्छेदः—

भर्तृदारिके ( सम्बोधनम् ) ननु ( अव्ययम् ) भणामि ( क्रिया ) किम् ( १।१ ) एतस्याः ( ६।१ ) निष्करुणायाः ( ६।१ ) पुरतः ( तसिलन्तम् ) वादितेन ( ३।१ ) या ( १।१ कर्त्री ) एतावन्तम् ( २।१ कालविशे. ) कालम् ( २।१ ) कन्यकाजनदुष्करैः ( ३।३ ) नियमोपासनैः ( ३।३ ) आराधयन्त्याः ( ६।१ ) अद्य ( अव्ययम् ) अपि ( अव्ययम् ) न ( अव्ययम् ) ते ( ६।१ ) प्रसादम् ( २।१ कर्म ) दर्शयति ( क्रिया )।

व्याख्या—

निजप्रश्नाभिप्राय प्रकटयन्ती चेटी पुनराह-भर्तृदारिक इति। हे भर्तृदारिके ! राजपुत्रि ! ननु वितर्के अहं भणामि कथयामि, निष्करुणाया निर्दयाया एतस्या देव्या पुरतो वादितेन शब्दितेन किं किमपि प्रयोजनमित्यर्थः, या देवी एतावन्तम् इयत्प्रमाणं कालं समयम् "कालाध्वनोरत्यन्तसंयोगे" इति द्वितीया। कन्यकेति कन्यकाजनस्य दुष्कराणि दुःखेन कर्तुं शक्यानि तैः नियमोपासनैः नियमाश्च उपासनं शुश्रूषा च तैः आराधयन्त्या ध्यायन्त्या. ते तव अद्यापि अद्यतनदिवसपर्यन्तमपि न प्रसादं प्रसन्नतां दर्शयति।

**विदूषकः। कण्णआ क्खु एषा। किं ण पेक्खम्ह। [ ख ]**

**नायकः। को दोषः। निर्दोषदर्शनाः कन्यका भवन्ति। किन्तु**

---

( क ) भर्तृदारिके ! ननु भणामि किमेतस्याः निष्करुणायाः पुरतो वादितेन यो एतावन्तं काल कन्यकाजनदुष्करैर्नियमोपासनैराराधयन्त्या अद्यापि न ते प्रसादं दर्शयति।

( ख ) कन्यका खल्वेषा। किं न प्रेक्षावहे।

**कदाचिदस्मान् दृष्ट्वा बालभावसुलभात् साध्वसान्न चिरमिह तिष्ठेत् ! तदनेनैव तमालजालान्तरेण पश्यावः ।**

क इति ।

पदच्छेदः—

कः ( १।१ ) दोषः ( १।१ ) निर्दोषदर्शनाः ( १।३ कन्यकाविशे. ) कन्यका ( १।३ कर्तृप. ) भवन्ति ( क्रिया ) किन्तु ( अव्ययम् ) कदाचित् ( अव्ययम् ) अस्मान् ( २।३ क्त्वान्तकर्म ) दृष्ट्वा ( क्त्वान्तम् ) बालभावसुलभात् ( ५।१ ) साध्वसात् ( ५।१ ) न ( अव्ययम् ) चिरम् ( अव्ययम् ) इह ( अव्ययम् ) तिष्ठेत् ( क्रिया ) तत् ( १।१ ) अनेन ( ३।१ ) एव ( अव्ययम् ) तमालजालान्तरेण ( ३।१ ) पश्यावः ( क्रिया ) ।

व्याख्या—

क इति । को दोषः कन्यकादर्शने इत्यर्थः, न कोऽपीति भावः यतो निर्दोष दर्शना निर्दोषं दर्शनं यासां तादृश्यः, कन्यका भवन्ति । किन्तु कदाचिद् अस्मान् अपरिचितपुरुषान् दृष्ट्वा बालेति बालभावो बाल्यावस्था तत्सुलभात् अत एव साध्वसाद् भयाद् इहाऽस्मिन् प्रदेशे चिरं दीर्घकालं न तिष्ठेत् । तत्तस्माद्धेतोः अनेन अग्रतो दृश्यमानेनैव तमालजालान्तरेण तमालवृक्षसमूहव्यवधानेन पश्यावः अवलोकयावः ।

**विदूषकः । एव्वं करेह्य । उभौ पश्यतः । [ क ]**

**विदूषकः । [ दृष्ट्वा सविस्मयम् ] भो वअस्स ! पेक्ख पेक्ख, अहह अच्छरिअं ! ण केवलं वीणाविण्णाणेणेव्व सुहं करेदि । जाव इमिणा वीणाविण्णाणाणुरुवेण रुवेणवि अच्छीणं सुहं उप्पादेदि । का उण एसा ? । किं दाव देवी ? । आहो णाअकण्णआ ? । आहो विज्जाहरदारिआ ? । आहो सिद्धकुलसम्भवेत्ति ? [ ख ]**

दृष्ट्वेति ।

पदच्छेदः—

[ दृष्ट्वा ( क्त्वान्तम् ) सविस्मयम् । ( क्रियाविशेषणम् ) ] भोः (अव्ययम् वयस्य ( सम्बोधनम् ) प्रेक्षस्व प्रेक्षस्व ( क्रियाद्वयम् ) अहह ( अव्ययम् ) आश्चर्यम् ( १।१ ) न ( अव्ययम् ) केवलम् ( क्रियाविशे ) वीणाविज्ञानेन ( ३।१ )

---

( क ) एवं कुर्वः ।

( ख ) भो वयस्य ! प्रेक्षस्व प्रेक्षस्व अहह आश्चर्यम् ! न केवलं वीणाविज्ञानेनैव सुखं करोति । यावत् अनेन वीणाविज्ञानानुरूपेण रूपेणापि अक्ष्णोः सुखमुत्पादयति । का पुनरेषा ? किं तावत् देवी ? आहोस्वित् नागकन्यका ? आहोस्वित् विद्याधरदारिका आहोस्वित् सिद्धकुलसम्भवेति ?

एव ( अव्ययम् ) सुखम् ( २।१ कर्म ) करोति ( क्रिया ) यावत् ( अव्ययम् ) अनेन ( ३।१ रूपविशे ) वीणाविज्ञानानुरूपेण ( ३।१ रूपविशे ) रूपेण ( ३।१ ) अपि ( अव्ययम् ) अक्ष्णो ( ६।२ ) सुखम् ( २।१ कर्म ) उत्पादयति ( क्रिया ) का ( १।१ ) पुनः ( अव्ययम् ) एषा ( १।१ ) किम् ( १।१ ) तावत् (अव्ययम्) देवी ( १।१ ) आहोस्वित् ( अव्ययम् ) नागकन्यका ( १।१ ) आहोस्वित् (अव्ययम्) विद्याधरदारिका ( १।१ ) आहोस्वित् ( अव्ययम् ) सिद्धकुलसम्भवा (१।१) इति ( अव्ययम् )।

व्याख्या—

दृष्ट्वेति। सविस्मयं साश्चर्यं दृष्ट्वा विदूषक आह—भो वयस्य ? मित्र ? प्रेक्षस्व प्रेक्षस्व पश्य पश्य अहहेत्याश्चर्यद्योतकमव्ययम्, आश्चर्यम् ? इयं केवलं वीणाविज्ञानेन वीणाया यद् विज्ञानं नैपुण्यं तेनैव न सुखम् आनन्दं करोति जनयति-यावत् वीणेति, वीणाविज्ञानस्य अनुरूपेण सदृशेन अनेन दृष्टिविषयीभूतेन रूपेण आकृत्याऽपि अक्ष्णो. चक्षुषो· सुखम् उत्पादयति उद्भावयति। एषा पुनः का इति, किं तावद् देवी स्वर्गस्त्री ? आहोस्विदितिप्रश्नार्थकमव्ययम्, किं नागकन्या नागी ? आहोस्वित् विद्याधरदारिका विद्याधरकन्या ? आहोस्वित् सिद्धकुलसम्भवा सिद्धवंशोत्पन्ना ? इति।

**नायक। [ सस्पृहमवलोकयन् ] वयस्य ! केयमिति नावगच्छामि। एतत् पुनरहं जानामि।**

सस्पृहमिति।

पदच्छेद.—

( सस्पृहम् ( क्रियाविशे. ) अवलोकयन् ( १।१ शत्रन्तम् ) वयस्य (सम्बोधनम् ) का ( १।१ ) इयम् ( १।१ ) इति ( अव्ययम् ) न ( अव्ययम् ) अवगच्छामि ( क्रिया ) एतत् ( २।१ कर्म ) पुन ( अव्ययम् ) अहम् ( १।१ ) जानामि ( क्रिया )।

व्याख्या—

सस्पृहमिति। स स्पृहं सेच्छम् अवलोकयन् पश्यन् आह—हे वयस्य मित्र ? इयं का किंजातीया इति न अवगच्छामि जानामि, अहं तु पुनर् एतज्जानामि तदिदमित्याह—

> **स्वर्गस्त्री यदि तत् कृतार्थमभवच्चक्षुः सहस्रं हरे-**
> **र्नागी चेन्न रसातलं शशभृता शून्यं मुखेऽस्याः स्थिते।**
> **जातिर्नः सकलान्यजातिजयिनी विद्याधरी चेदियं।**
> **स्यात् सिद्धान्वयजा यदि त्रिभुवने सिद्धाः प्रसिद्धास्ततः॥ १५॥**

स्वर्गस्त्रीति।

पदच्छेदः—

स्वर्गस्त्री (१।१) यदि (अव्ययम्) तत् (१।१) कृतार्थम् (१।१ कर्तृवि.) अभवत् (क्रिया) चक्षुःसहस्रम् (१।१कर्तृ) हरेः (६।१ सम्बन्धः) नागी (१।१) चेत् ( अव्ययम् ) न ( अव्ययम् ) रसातलम् (१।१ कर्तृ ) शशभृता (३।१) शून्यम् (१।१ कर्तृविशे. )मुख (७।१) अस्याः (६।१ सम्बन्धः ) स्थिते (७।१ निष्ठान्तम्) जातिः (१।१कर्तृ) नः (६।३ सं. ) सकलान्यजातिजयिनी (१।१ कर्तृविशे ) विद्याधरी ( १।१ ) चेत् ( अव्ययम् ) इयम् ( १।१ ) । स्यात् ( क्रिया ) सिद्धान्वयजा ( १।१ ) यदि ( अव्ययम् त्रिभुवने ( ७।१ ) सिद्धा ( १।३ ) प्रसिद्धाः ( निष्ठान्तं सिद्धविशे. ) ततः [ तसिलन्तम् ] ॥

व्याख्या—

स्वर्गस्त्रीति । स्यादिति क्रियायाः सर्ववाक्यैः सम्बन्धः, यदि इयं स्वर्गस्त्री दिव्य नायिका स्यात् तत् हरेः शक्रस्य चक्षुःसहस्रं नेत्रसहस्रं कृतार्थं कृतोऽर्थो येनेति कृतार्थं सफलम् अभवत् । चेद् यदि इयं नागी नागकन्यका स्यात् तर्हि अस्या नायिकाया मुखे स्थिते विद्यमाने सति रसातलं पातालं "अधोभुवनपातालं बलिसद्म रसातलमित्यमरः" शशभृता चन्द्रेण शून्यं रिक्तं न । चेद् इयं विद्याधरी विद्याधरकुलोत्पन्ना स्यात् तर्हि नोऽस्माकं जीमूतवाहनप्रभृतीनां जातिः कुलं सकलान्यजातिजयिनी सकलाः सर्वा या अन्या इतरा जातयस्तासां जयिनी जेत्री जातेति शेषः । यदि इयं सिद्धान्वयजा सिद्धवंशोत्पन्ना स्यात् तर्हि त्रिभुवने त्रयाणां भुवनानां समाहारः त्रिभुवनं तस्मिन् त्रिलोके सिद्धाः देवयोनिविशेषाः प्रसिद्धा विख्याता अभवन् ॥ १५ ॥

शार्दूलविक्रीडितं वृत्तम् । सन्देहालङ्कारः "सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः" इति लक्षणात् ॥

**विदूषकः । [ नायकमवलोक्य सहर्षमात्मगतम् ] दिट्ठिआ चिरस्स दाव कालस्स पडिदो क्खु एसो गोअरे मम्मदस्स । [ आत्मानं निर्दिश्य भोजनमभिनीय ] अहवा णहि णहि । मम एव्व एक्कस्स वह्मणस्स ( क )**

आत्मगतम् स्वगतम् "अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्" दिष्ट्येति ।

पदच्छेदः—

दिष्ट्या ( ३।१ ) चिरस्य ( ६।१ कालविशे. ) तावत् ( अव्ययम् ) कालस्य ( ६।१ ) पतितः ( निष्ठान्तक्रिया ) खलु ( अव्ययम् ) एष ( १।१ कर्ता ) गोचरे ( ७।१ ) मन्मथस्य ( ६।१ ) [ आत्मानम् ( २।१ ल्यबन्तकर्म ) निर्दिश्य

( क ) दिष्ट्या चिरस्य तावत् कालस्य पतितः खल्वेष गोचरे मन्मथस्य । अथवा नहि नहि । ममैव एकस्य ब्राह्मणस्य ।

( ल्यबन्तम् ) भोजनम् ( २।१ ल्यबन्तकर्म ) अभिनीय ( ल्यबन्तम् ) ] अथवा ( अव्ययम् ) नहि नहि ( अव्ययानि ) मम ( ६।१ ) एव ( अव्ययम् ) एकस्य ( ६।१ ) ब्राह्मणस्य ( ६।१ ) ॥

व्याख्या—

नायकं तत्कन्यकाऽऽसक्तं दृष्ट्वा सहर्षं स्वचेतसि कथयति दिष्ट्येति। दिष्ट्या भाग्येन "धन्यवादोऽस्तीत्यर्थः." एष नायकः तावत् चिरस्य दीर्घस्य कालस्य समयस्य मन्मथस्य कामदेवस्य गोचरे विषये पतितः खलु। [ तत आत्मानं स्वं निर्दिश्य भोजनम् अभिनीय लक्षणीकृत्य आह ] अथवा पक्षान्तरे, नहि नहि, मन्मथस्य गोचरे न पतित इत्यर्थः, परन्तु मम एकस्य ब्राह्मणस्यैव गोचरे पतितः "अनयोर्विवाहादौ मम भोजनादिसिद्धिर्भविष्यतीत्यर्थः ॥

चेटी। [ सप्रणयम् ] भट्टिदारिए ! णं भणामि । किं एदाए णिक्करुणाए पुरदो वाइदेण। [ इति वीणामाक्षिपति ] ( क )

आक्षिपति ( क्रिया ) आच्छिनत्तीत्यर्थः।

नायिका। [ सरोषम् ] हञ्जे ! मा भयवर्दिं गोरिं अधिक्खिव णं अज्ज किदो मे भअवदिए पसादो। ( ख )

सरोषमिति। सरोषं सक्रोधं नायिकाऽऽह—मा भगवतीम् ऐश्वर्यवतीं गौरीम् अधिक्षिप अपमानय तिरस्कुर्वित्यर्थः।

चेटी। [ सहर्षम् ] भट्टिदारिए ! कहेहि दाव कीदिसो। ( ग )

नायिका। हञ्जे। जाणामि। अज्ज सिविणए एदं एव्व वीणं वादअन्ति भअवदीए गोरिए भणिदह्मि। वच्छे मलअवदि ! परितुट्ठह्मि तुह एदिणा वीणाविण्णाणादिसएण। । इमाए अ ! बालजणदुक्कराए असाहारणाए ममोवरि भत्तिए। ता विज्जाहरचक्कवट्टी अचिरेण ज्जेव पाणिग्गहणं दे णिव्वत्तइस्सदित्ति। घ

जानामीति।

पदच्छेदः—

जानामि ( क्रिया ) अद्य ( अव्ययम् ) स्वप्ने ( ७।१ ) एताम् ( २।१ शत्रन्त कर्मविशे. ) एव ( अव्ययम् ) ( वीणाम् २।१ शत्रन्तकर्म ) वादयन्ती ( १।१

---

( क ) भर्तृदारिके ननु भणामि। किमेतस्या निष्करुणायाः पुरतो वादितेन।

( ख ) हञ्जे ! मा भगवतीं गौरीमधिक्षिप। नन्वद्य कृतो मे भगवत्या प्रसादः।

( ग ) भर्तृदारिके ! कथय तावत् कीदृशः।

( घ ) हञ्जे ! जानामि। अद्य स्वप्ने एतामेव वीणां वादयन्त्या भगवत्या गौर्या भणितास्मि। वत्से मलयवति ! परितुष्टास्मि तवैतेन वीणाविज्ञानातिशयेन। अनया च बालजनदुष्करया असाधारणया ममोपरि भक्त्या।

यन्तम् ) भगवत्या ( ३।१ कर्तृविशे. ) गौर्या ( ३।१ कर्तृपदम् ) भणिता ( निष्ठान्तक्रिया ) अस्मि ( अहमर्थेऽव्ययम् ) । वत्से ( सम्बोधनम् ) मलयवति ( सम्बोधनम् ) परितुष्टा ( निष्ठान्तक्रिया ) अस्मि ( क्रिया ) तव ( ६।१ ) एतेन ( ३।१ ) वीणाविज्ञानातिशयेन ( ३।१ ) अनया ( ३।१ ) भक्तिपदाविशे० च ( अव्ययम् ) बालजनदुष्करया (३।१ भक्तिपदविशे.) असाधारणया ( ३।१ भक्तिपदविशे. ) मम ( ६।१ ) उपरि ( अव्ययम् ) भक्त्या (३।१) तद् (१।१) विद्याधरचक्रवर्त्ती ( १।१ कर्तृपदम् ) अचिरेण ( ३।१ ) एव ( अव्ययम् ) पाणिग्रहणम् (२।१ कर्म) ते ( ६।१ ) निर्वर्त्तयिष्यति ( क्रिया ) इति ( अव्ययम् ) ।

व्याख्या—

भगवत्या कीदृशः प्रसादः कृत इत्यस्योत्तरमाह—जानामीति । अद्य अस्मिन् दिने व्यतीतायां रात्राविल्यर्थः । स्वप्ने निद्रायाम् अस्मि अहम् एतामेव वीणा वादयन्ती शब्दयन्ती भगवत्या गौर्या पार्वत्या भणिता कथिता । किं भणितेत्याह, हे वत्से ? प्रिये ? मलयवति ? 'अम्बार्थनद्योर्ह्रस्व इति ह्रस्वत्वम्' तव मलयवत्या एतेन 'वीणेति' वीणाविज्ञानस्य वीणावादननैपुण्यस्य अतिशयेन बाहुल्येन परितुष्टा प्रसन्नाऽस्मि । अनया बालेति, बालजनस्य कुमारजनस्य दुष्करया दुःखेन कर्तुं शक्यया असाधारणया विशिष्टया मम गौर्या उपरि मयि इत्यर्थः भक्त्या अनुरागेण च परितुष्टाऽस्मि । तत्तस्मात् मत्परितोषकारणात् विद्याधरचक्रवर्त्ती विद्याधरेषु देवयोनिविशेषेषु चक्रवर्त्ती अधीश्वरो जीमूतवाहननामा अचिरेण शीघ्रमेव ते तव पाणिग्रहणं हस्तग्रहणं विवाहमित्यर्थः निर्वर्तयिष्यति सम्पादयिष्यति ।

**चेटी । [ सहर्षम् ] भट्टिदारिए जदि एव्वं ता कीस सिविणअं इमं भणीअदि । णहिअअत्थिदो वरो देवीए दिण्णो । [क]**

हृदयस्थित इति ? हृदये मनसि स्थितः संकल्पित एवेत्यर्थः ।

**विदूषकः । [ श्रुत्वा ] भो वअस्स ? अवसरो क्खु एसो अह्माणं देवीदंसणस्स । ता एहि उवसप्पह्म । [ख]**

**नायकः । न तावत् प्रविशामि ।**

उपसर्पाव इति समीपं गच्छाव इत्यर्थः ।

**विदूषकः । [ अनिच्छन्तमपि नायकमुद्दिश्य बलादाकृष्य । उपसृत्य ] सोत्थि भोदीए । भोदि । सच्चकं ज्जेव चदुरिआ भणादि ।**

---

तद् विद्याधरचक्रवर्त्ती अचिरेणैव ते पाणिग्रहणं निर्वर्तयिष्यतीति ।

( क ) भर्तृदारिके यद्येवं तत् किं स्वप्न एष भण्यते । ननु हृदयस्थितो वरो देव्या दत्तः ।

( ख ) भो वयस्य ! अवसरः खल्वेषोऽस्माकं देवीदर्शनाय । तदेहि उपसर्पाव ।

रो एव्व सो देवीए दिण्णो [क]

अनिच्छन्तमिति।

पदच्छेदः—

[ अनिच्छन्तम् ( २।१ शत्रन्तं कर्मविशे. ) अपि ( अव्ययम् ) नायकम् [ २।१ ल्यबन्तकर्म ] उद्दिश्य [ल्यबन्तम्] बलाद् [५।१] आकृष्य [ल्यबन्तम्] स्वस्ति [ अव्ययम् ] भवत्यै [ ४।१ ] भवति ? [ सम्बोधनम् ] सत्यकम् [ क्रियाविशे. ] एव [ अव्ययम् ] चतुरिका [ १।१ कर्त्री ] भणति [ क्रिया ] वर [ १।१ निष्ठान्तकर्म ] एव [ अव्ययम् ] सः [ १।१ कर्म विशे. ] देव्या [ ३।१ कर्तृपदम् ] दत्त [ निष्ठान्तक्रिया ]।

व्याख्या—

अनिच्छन्तम् अभ्यन्तरं गन्तुमनभिलषन्तमपि नायकं जीमूतवाहनम् उद्दिश्य लक्षणीकृत्य बलात् सहसा आकृष्य उपसृत्य समीपं गत्वाऽऽहेति शेषः भवत्यै पूज्यायै स्वस्ति कल्याणमस्तु "नमः स्वस्तीत्यादिना चतुर्थी" हे भवति ? पूज्ये ? चतुरिका तन्नाम्नी चेटी सत्यकं सत्यमेव भणति वदति, स जीमूतवाहन एव वरो देव्या दत्तः समर्पितः।

नायिका। [ ससाध्वसमुत्तिष्ठन्ती नायकमुद्दिश्य ) हञ्जे ? को णु क्खु एसो ? [ ख ]

ससाध्वसमिति, सभयमित्यर्थः कुमारीत्वात् इति भावः।

चेटी। [ नायकं निरूप्यापवार्य्य ] इमाए अणण्णसरिसाए आकिदीए एसो सो भअवदीए पसादीकिदोत्ति तक्केमि। [ ग ]

नायकमिति।

पदच्छेदः—

नायकम् ( २।१ ल्यबन्तकर्म ) निरूप्य ( ल्यबन्तम्) अपवार्य ( ल्यबन्तम्) अनया ( ३।१ आकृतिविशे. ) अनन्यसदृश्या ( ३।१ आकृतिविशे. ) आकृत्या ( ३।१ उपलक्षणम् ) एष ( १।१ ) सः ( १।१ ) भगवत्या ( ३।१ ) प्रसादीकृत ( निष्ठान्तक्रिया ) इति ( अव्ययम् ) तर्कयामि ( क्रिया )।

व्याख्या—

( नायकं जीमूतवाहनं निरूप्य दृष्ट्वा अपवार्य रहस्यकथनार्थमन्यतः परावृत्य

---

( क ) स्वस्ति भवत्यै। भवति ? सत्यकमेव चतुरिका भणति। वर एव स देव्या दत्त।

( ख ) हञ्जे ? को नु खल्वेष. ?

( ग ) अनया अनन्यसदृश्या आकृत्या एष स भगवत्या प्रसादीकृत इति तर्कयामि।

आह ) अनया अनन्यसदृश्या अनन्योपमया आकृत्या स्वरूपेण एष नायकः स पूर्वोक्तो भगवत्या गौर्या प्रसादीकृतः प्रसादरूपेण दत्त इत्यर्थः । इत्येवं तर्कयामि अनुमिनोमि ।

नायिका सस्पृहं सलज्जं च नायकमवलोकयति ।

**नायकः । तनुरियं तरलायतलोचने ! श्वसितकम्पितपीनघनस्तनि ।**
**श्रममलं तपसैव गता पुन किमितिसम्भ्रमकारिणि ! खिद्यते ॥१६॥**

' तनुरिति '

पदच्छेदः—

तनुः ( १।१ कर्तृपदम् ) इयम् ( १।१ कर्तृविशे. ) तरलायतलोचने ( सम्बोधनम् ) श्वसितकम्पितपीनघनस्तनि ( सम्बोधनम् ) श्रमम् ( २ १ कर्म ) अलम् ( अव्ययम् ) तपसा ( ३।१ करणम् ) एव ( अव्ययम् ) गता ( १।१ निष्ठान्त क्रिया ) पुनः ( अव्ययम् ) किम् ( १।१ ) इति ( अव्ययम् ) सम्भ्रमकारिणि ( सम्बोधनम् ) खिद्यते ( क्रिया )।

व्याख्या—

परपुरुषधिया सखेदां नायिकामवलोक्याऽऽश्वासयति 'तनुरिति ' हे तरलायतलोचने ? तरले चपले आयते विस्तृते लोचने नयने यस्याः सा तत्सम्बुद्धौ ' हे श्वसितकम्पितपीनघनस्तनि । श्वसितेन दीर्घाश्वासेन कम्पितौसञ्जातकम्पौ पीनौ निविडौ घनौ सान्द्रौ स्तनौ कुचौ यस्या. सा तत्सम्बुद्धौ, इयं तनु मूर्तिः ' स्त्रिया मूर्तिस्तनुस्तनूरित्यमरः ' तपसा तपश्चर्ययैव अलम् अत्यर्थम् श्रम खेदं गता प्राप्ता पुनः हे सम्भ्रमकारिणि ? साध्वसकारिणि ? 'सम्भ्रम· साध्वसेऽपि स्यादिति मेदिनी' किं किमर्थम् इति एवम्प्रकारेण खिद्यते क्लिश्यते त्वयेति शेष ।

द्रुतविलम्बितं वृत्तम् ' द्रुतविलम्बितमाह नभौ भराविति लक्षणात् ' । परिकरालङ्कारः ।

**नायिका । [ अपवार्य ] हञ्जे ! अदिसद्धसेण ण सुक्कुणोमि पदस्स अहिमुही ठादुं [ नायकं तिर्यक् सलज्जञ्च पश्यन्ती किञ्चित् पराङ्मुखी तिष्ठति ] । [ क ]**

पदच्छेद —

हञ्जे ( सम्बोधनम् ) अतिसाध्वसेन ( ३।१ ) न ( अव्ययम् ) शक्नोमि ( क्रिया ) एतस्य ( ६।१ ) अभिमुखी ( १।१ कर्त्री ) स्थातुम् ( तुमुन्नन्तम् ) [ नायकम् ( २।१ शत्रन्तकर्म ) तिर्यक् ( क्रियाविशेषणम् ) सलज्जम् ( क्रियाविशेषणम् ) च ( अव्ययम् ) पश्यन्ती ( १।१ शत्रन्तम् ) किञ्चित् ( क्रियाविशेषणम् ) पराङ्मुखी ( १।१ कर्त्री ) तिष्ठति ( क्रिया ) ] ।

---

(क) हञ्जे ! अतिसाध्वसेन न शक्नोमि एतस्याभिमुखी स्थातुम् ।

व्याख्या—

हे हञ्जे ? चेटि ? अहम् अतिसाध्वसेन अतिसम्भ्रमेण एतस्य नायकस्य अभिमुखी सम्मुखस्था स्थातुं न शक्नोमि समर्थाऽस्मि । नायकं जीमूतवाहनं तिर्यक् वक्रमुखेन सलज्जं सव्रीडं च पश्यन्ती अवलोकयन्ती किञ्चित् पराङ्मुखी पश्चान्मुखी तिष्ठति ।

चेटी । भट्टिदारिए ! किं एदं ? [ क ]

नायिका । हञ्जे ! ण सक्कुणोमि एदस्स आसण्णे चिट्ठिदुं । ता इहि अण्णदो गच्छह्म ( उत्थातुमिच्छति ) । ( ख )

' हञ्जे इति '

विदूषकः । भो ! भाअदि क्खु एसा । मम पठिअविज्जं विअ मुहुत्तअं धारेमि । ( ग )

नायकः । को दोष. ?

' भो इति ' भो· ? अय ? एषा नायिका बिभेति भयं करोति 'अतोऽहं मम आत्मन पठितविद्याम् इव मुहूर्तं घटिकाद्वयमात्रं धारयामि रुणध्मि । यथा पठिता विद्या मुहूर्तमात्रमेव मयि तिष्ठति पश्चाद् विस्मृता भवति ' तथैव एनां किञ्चित्कालपर्यन्त वार्तालापादिनाऽत्रैवोपवेशयामीति भाव· ।

विदूषक· । भोदि ! किं एत्थ तुह्माणं तवोवणे ईदिसो आआरो जेण अदिही आअदो वाआमेत्तएण वि ण सम्भावीअदि । (घ)

वाङ्मात्रेणापि वाणीमात्रेणापि न सम्भाव्यते आद्रियते ।

चेटी । ( नायिकां दृष्ट्वा आत्मगतम् ) अणुरज्जदि विअ एत्थ एदाय दिट्ठी । भोदु एव्वं दावभणिस्सं । ( प्रकाशम् ) भट्टिदारिए ! जुत्तं भणादि बह्मणो । उइदो क्खु दे अदिहिजणसक्कारो । ता किं इदिसे महाणुभाव पडिवत्तिमूढ़ा चिट्ठसि ? अहवा चिट्ठ तुमं । अहं एव्व जधाणुरूवं करइस्सं । ( नायकं निर्दिश्य ) साअदं अज्जस्स आसणपरिग्गहेण अलङ्करेदु अज्जो इमं पदेसं । ( ङ )

"अनुरज्यत इति" ।

---

(क) भर्तृदारके ! किमेतत् ?

(ख) हञ्जे ! न शक्नोमि एतस्यासन्ने स्थातुम् । तदेह्यन्यतो गच्छाव· ।

(ग) भो ! बिभेति खल्वेषा । मम पठितविद्यामिव मुहूर्तं धारयामि ।

(घ) भवति ! किमत्र युष्माकं तपोवने ईदृश आचारः । येनातिथिरागतोवाङ्मात्रेणापि न सम्भाव्यते ।

( ङ ) अनुरज्यत इवात्रैतस्या दृष्टि । भवतु एवं तावद् भणिष्यामि । भर्तृदारिके ! युक्तं भणति ब्राह्मण । उचितः खलु ते अतिथिजनसत्कारः । तत्

पदच्छेदः—

अनुरज्यते ( क्रिया ) इव ( अव्ययम् ) अत्र ( अव्ययम् ) एतस्याः ( ६।१ ) दृष्टिः ( १।१ ) भवतु ( क्रिया ) एवम् ( अव्ययम् ) तावत् ( अव्ययम् ) भणिष्यामि ( क्रिया ) प्रकाशम् ( क्रियाविशेषणम् ) भर्त्तृदारिके ? ( सम्बोधनम् ) युक्तम् ( क्रियाविशे. ) भणति ( क्रिया ) ब्राह्मणः ( १।१ कर्त्ता ) उचित. ( निष्ठान्तम् ) खलु ( अव्ययम् ) ते ( ६।१ ) अतिथिजनसत्कार· ( १।१ ) तत् ( १।१ ) किम् ( १।१ ) ईदृशे ( ७।१ ) महानुभावे ( ७।१ ) प्रतिपत्तिमूढा ( १।१ कर्त्री ) तिष्ठसि ( क्रिया ) अथवा ( अव्ययम् ) तिष्ठ ( क्रिया ) त्वम् ( १।१ कर्त्री ) अहम् ( १।१ कर्त्री ) एव ( अव्ययम् ) यथानुरूपम् ( क्रियाविशे. ) करिष्यामि ( क्रिया ) नायकम् ( २।१ ल्यबन्तकर्म ) निर्दिश्य ( ल्यबन्तम् ) स्वागतम् ( १।१ ) आर्यस्य ६।१ ) आसनपरिग्रहेण ( ३।१ ) अलङ्करोतु ( क्रिया ) आर्यः ( १।१ कर्त्ता ) इमम् ( २।१ ) कर्मविशे. ) प्रदेशम् ( २।१ कर्म ) ॥

व्याख्या—

"अनुरज्यत इति" एतस्या नायिकाया दृष्टिः अत्र नायकेऽनुरज्यत इव अनुरक्ता भवतीव "रञ्ज रागे दिवादित्वात् श्यन्" भवतु अस्तु । एवम् एतदनुसारमेव तावद् भणिष्यामि वदिष्यामि । ( प्रकाशं सर्वश्रवणयोग्यमाह । "सर्वश्राव्य प्रकाश स्यादिति दर्पणोक्तेः" ) भर्त्तृदारिके ! राजपुत्रि ! ब्राह्मणो युक्तम् उचितं भणति वदति, ते तव अतिथिजनसत्कार· अतिथिजनस्य अभ्यागतजनस्य सत्कार आदर उचितो युक्त· खलु तत्तस्मात्कारणाद् ईदृशे महानुभाव प्रतापशीले कि किमर्थं प्रतिपत्तिमूढा विचारशून्या तिष्ठसि ? अथवा पक्षान्तरे त्व तिष्ठ अहं चेत्येव यथानुरूपं यथोचितं करिष्यामि ( नायकं निर्दिश्य लक्ष्यीकृत्य आह ) आर्यस्य पूज्यस्य स्वागतं शोभनागमनं भवत्विति शेष आर्य आसनपरिग्रहेण आसनस्वीकारेण इमं प्रदेशं स्थानम् अलङ्करोतु भूषयतु ॥

विदूषकः । भो वअस्स ! सोहणं एसा भणादि । उवविसिअ एत्थ मुहुत्तअं वीसमह्म । ( क )

विश्राम्यावः विश्रामं कुर्वः । श्रमुधातोर्दिवादित्वात् "शामामष्टाना दीर्घ श्यनि" इति दीर्घः ॥

नायकः । युक्तमाह भवान् । [ उभावुपविशतः ]

नायिका । [ चेटीमुद्दिश्य ] अइ परिहाससीले ! मा एव्वं करेहि । कदावि कोवि तावसो पेक्खदि । तदो मं अविणीदेत्ति सम·

---

किमीदृशे महानुभावे प्रतिपत्तिमूढा तिष्ठसि ? अथवा तिष्ठ त्वम् अहमेव यथानुरूपं करिष्यामि । स्वागतमार्यस्य । आसनपरिग्रहेण अलङ्करोत्वार्य इमं प्रदेशम् ।

( क ) भो वयस्य ! शोभनमेषा भणति । उपविश्यात्र मुहूर्तं विश्राम्यावः ।

भावइस्सदि । ( क )
"अयीति"

पदच्छेद.—

अयि ( सम्बोधनम् ) परिहासशीले ( सम्बोधनम् ) मा ( अव्ययम् ) एवम् ( अव्ययम् ) कुरु ( क्रिया ) कदा ( अव्ययम् ) अपि ( अव्ययम् ) कः ( १।१ कर्तृविशेष. ) अपि ( अव्ययम् ) तापस ( १।१ कर्ता ) प्रेक्षते ( क्रिया ) तत. ( तासिलन्तम् ) माम् ( २।१ कर्म ) अविनीता ( १।१ ) इति ( अव्ययम् सम्भावयिष्यति ( क्रिया ) ।

व्याख्या—

अयीति कोमलालापे 'हे परिहासशीले ? परिहास एव शीलं स्वभावो यस्याः सा तत्सम्बुद्धौ' एवम् अनेन प्रकारेण मा कुरु, यत कदापि कोऽपि तापसः तपः करोतीति तापस· तपस्वी प्रेक्षते पश्यति ततो मा मलयवतीम् अविनीता विनीतं विनयोऽस्याश्स्तीति विनीता "अर्शाद्यच्" सा न भवतीति अविनीता दुराचारिणी "निपातेन कर्मणोऽभिहितत्वात्प्रथमा" इत्येव सम्भावयिष्यति अनुमास्यतीत्यर्थः ॥

तत· प्रविशति तापस ।

तापस । आज्ञापितोऽस्मि कुलपतिना कौशिकेन । यथा वत्स शाण्डिल्य ! पितुराज्ञया सिद्धयुवराजमित्रावसुर्भविष्यद्विद्याधरचक्र· वर्तिनं कुमारजीमूतवाहनम इहैव मलये पर्वते क्वापि वर्तमानं भगिन्या मलयवत्या वरहेतोर्द्रष्टुमद्य गत । तत्र प्रतीक्षमाणाया मलयवत्याः कदाचिन् मध्यन्दिनसवनवेलावधिरतिक्रामेत् ।

तदेनामाहूयागच्छेति । तत् तपोवनगौरीगृहमेव गच्छामि । [ परिक्रम्य भूमिं निरूप्य सविस्मयम् ] अये ! कस्य पुनरियं पांशुले भूप्रदेशे प्रकाशचक्रचिह्ना पदपंक्ति । (अग्रतो जीमूतवाहनं निर्दिश्य) नूनमस्यैवेयं महापुरुषस्य । तथाहि—

"आज्ञापित इति" ।

पदच्छेद —

आज्ञापित: ( १।१ निष्ठान्तम् ) अस्मि ( क्रिया ) कुलपतिना (३।१ कर्तृवि.) कौशिकेन ( ३।१ कर्त्रा ), यथा ( अव्ययम् ) वत्स ( सम्बोधनविशे. ) शाण्डिल्य ( सम्बोधनम् ) पितु ( ६।१ ) आज्ञया ( ३।१ ) सिद्धयुवराजमित्रावसु ( १।१ कर्ता ) भविष्यद्विद्याधरचक्रवर्तिनम् ( २।१ कर्मविशे. ) कुमारजीमूतवाहनम् ( २।१ तुमुन्नन्तकर्म ) इह ( अव्ययम् ) एव [ अव्ययम् ] मलये [ ७।१ ]

( क ) अयि परिहासशीले ? मैव कुरु । कदापि कोऽपि तापस प्रेक्षते । ततो मामविनीतेति सम्भावयिष्यति ।

पर्वते [ ७।१ ] क्व [ अव्ययम् ] अपि [ अव्ययम् ] वर्तमानम् [२।१ कर्मविशे.] भगिन्याः [ ६।१ ] मलयवत्या [६।-] वरहेतो [४।१ द्रष्टुम् (तुमुन्नन्तम्] अद्य [अव्ययम् ] गत• [१।१ निष्ठान्तक्रिया) तम् (२।१ शानजन्त कर्म) च (अव्ययम्) प्रतीक्षमाणायाः (६।१ शानजन्तम) मलयवत्याः (६।१) कदाचित् (अव्ययम्) मध्यन्दिनसवनवेलावधिः (१।१ कर्तृप.) अतिक्रामेत् (क्रिया) तत् (१।१) एनम् (२।१ ल्यबन्तकर्म ) आहूय ( ल्यबन्तम ) आगच्छ ( क्रिया ) इति ( अव्ययम्) तत् (१।१) तपोवनगौरीगृहम् ( २।१ कर्म ) एव ( अव्ययम् ) गच्छामि (क्रिया) ( परिक्रम्य ( ल्यबन्तम् ) भूमिम् ( २।१ ल्यबन्तकर्म ) निरूप्य ( ल्यबन्तम् ) अये ( अव्ययम् ) कस्य ( ६।१ ) पुन. ( अव्ययम् ) इयम् ( १।१ कर्तृविशे. ) पांशुले ( ७।१ अधिकरणविशे. ) भूप्रदेशे ( ७।१ अधिकरणम् ) प्रकाशचक्र- चिन्हा ( १।१ कर्तृविशे. ) पदपंक्तिः ( १।१ कर्तृपदम् )।

व्याख्या—

तापसः प्रविश्य आह—'आज्ञापित इति' कुलपतिना ' एकादशसहस्राणि योऽन्नदानादिना भरेत्। स वै कुलपतिर्नाम वेदवेदाङ्गपारगः ' इति लक्षणलक्षितेन कौशिकेन कुशिकस्य गोत्रापत्यं पुमान् कौशिकस्तेन 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्, इत्यञ् ' विश्वामित्रेण ' अयं विश्वामित्र· सिद्धाना कुलगुरु· ' अहम् आज्ञापितोऽस्मि दत्ताज्ञोऽस्मि। किमाज्ञापितस्तदाह यथेति, वत्स ? प्रिय ? शाण्डिल्य ? पितु· विश्वावसो. आज्ञया अनुशासनेन सिद्धेति, सिद्धेषु युवराजो राजकुमारः 'युवराजस्तु कुमारो भर्तृदारिक इत्यमरः' मित्रावसुतदाख्य भविष्यदिति भविष्यतीति भविष्यन् 'शतृप्रत्ययं, सचासौ विद्याधरेषु चक्रवर्ती अधीश्वरस्तम्, इहास्मिन्नेव मलये तदाख्ये पर्वते शैले क्वापि कस्मिंश्चित्प्रदेशे वर्तमान विद्यमानं कुमारजीमूतवाहनं भगिन्याः स्वसु मलयवत्या वरहेतो वरनिमित्तं द्रष्टुम् अवलोकितुम् अद्य गत.। त मित्रावसु प्रतीक्ष- माणायाः अनुपालयन्त्या मलयवत्या कदाचिद् मध्यन्दिनेति, मध्यन्दिनं मध्याह्न तत्र यत्सवनं स्नानं तस्य वेलावधिः, समयसीमा अतिक्रामेत् व्यतीयात्, तत्तस्मा- त्कारणाद् एना मलयवतीम् आहूय सम्बोध्य आगच्छ आयाहि, इत्याज्ञापितोऽस्मि। तत् तपोवनगौरीगृहं तपोवने यद् गौरीगृह गौरीमन्दिरं तदेव गच्छामि। (परिक्रम्य भूमिं दृष्ट्वा वदति ) अये ? आश्चर्यबोधकमिदम्, पांशुले धूलियुक्ते भूप्रदेशे पृथ्वी प्रदेशे कस्य मानवस्य पुन. इयं प्रकाशेति, प्रकाशं स्पष्टं यथास्यात्तथा चक्रस्य चिन्हं लक्षणं यस्या तादृशी पदपंक्तिः चरणरेखा अस्ति।

उष्णीष स्फुट एष मूर्द्धनि विभात्यूर्णेयमन्तर्भ्रुवो-
श्चक्षुस्तामरसानुकारि हरिणा वक्षस्थलं स्पर्द्धते।
चक्राङ्के च यथा पदद्वयमिदं मन्ये तथा कोऽप्ययं

नो विद्याधरचक्रवर्त्तिपदवीमप्राप्य विश्राम्यति ॥ १७ ॥

'उष्णीष इति'

पदच्छेद —

उष्णीष. (१।१ कर्तृप.) स्फुट॰ (१।१ कर्तृविशे.) एष॰ (१।१ कर्तृविशे.) मूर्धनि (७।१) विभाति (क्रिया) ऊर्णा (१।१ कर्त्री) इयम् (१।१ कर्त्रीविश०) अन्तर् (अव्ययम्) भ्रुवो॰ (६।२) चक्षु. (१।१ कर्तृ) तामरसानुकारि (१।१ चक्षुर्विशे.) हरिणा (३।१) वक्षस्थलम् (१।१ कर्तृ) स्पर्धते (क्रिया) चक्राङ्कम् (१।१ कर्तृविशे) च (अव्ययम्) यथा (अव्ययम्) पदद्वयम् (१।१ कर्तृ) इदम् (१।१ कर्तृविशे.) मन्ये (क्रिया) तथा (अव्ययम्) क (१।१) अपि (अव्ययम्) अयम् (१।१) नो (अव्ययम्) विद्याधरचक्रवर्तिपदवीम् (२।१ ल्यबन्तकर्म) अप्राप्य (ल्यबन्तम्) विश्राम्यति (क्रिया)।

व्याख्या—

जीमूतवाहनं दृष्ट्वा चक्रवर्तित्व निश्चिन्वस्तल्लक्षणमेव वर्णयति—"उष्णीष इति" एष उष्णीष॰ शिरोवेष्टनं राजमुकुटविशेष इत्यर्थ स्फुट॰ स्पष्टो विभाति शोभते। भ्रुवोः नेत्राभ्यामूर्ध्वभागयोः "ऊर्ध्वे दृग्भ्या भ्रुवौ स्त्रियाविल्यमरः" अन्तर्मध्ये इयम् ऊर्णा रोमराजि विभाति। चक्षु. नयन च तामरसानुकारि तामरसं रक्तकमलम् "रक्तोत्पल तामरसमित्यमर" अनुकुरुते तच्छीलम्, वक्षस्थलं वक्षसो भुजान्तरस्य स्थलम् "खर्परे शरि विसर्गस्य लोपो वा वक्तव्य इति विसर्गलोप." हरिणा सिंहेन स्पर्धते वैरायते "वैरायते स्पर्धते वेत्याख्यातचन्द्रिका" यथा च इदं पदद्वयं चरणयुगल चक्राङ्क चक्रस्य अङ्कं चिह्नं यस्मिन् तादृशमस्ति तथा अहं मन्ये सम्भावयामि यदय कोऽपि मानव विद्याधरेति चक्रवर्तिन. विद्याधर पदवीम् उपाधिम् अप्राप्य नो विश्राम्यति विरमति। शार्दूलविक्रीडितं वृत्तम्। उत्प्रेक्षालङ्कार ॥ १७ ॥

अथवा कृतं सन्देहेन। व्यक्तमेतेनैव जीमूतवाहनेन भवितव्यम्। [मलयवती निरूप्य] अये! इयमपि राजपुत्री। [उभौ विलोक्य] चिरात् खलु युक्तकारी विधिः स्यात्। यदि युगलकमेतदन्योन्यानुरूपं घटयेत् [उपसृत्य नायकं निर्दिश्य स्वस्ति भवते।

नायकः। भगवन् जीमूतवाहनोऽभिवादयते। उत्थातुमिच्छाति।

"अथवेति"

पदच्छेद.—

अथवा (अव्ययद्वयम्) कृतम् (निष्ठान्तम्) सन्देहेन (३।१) व्यक्तम् (क्रियाविशे.) एतेन (कर्तृविशे.) एव (अव्ययम्) जीमूतवाहनेन (३।१ कर्तृपदम्) भवितव्यम् (तव्यन्तक्रिया) मलयवतीम् (२।१ ल्यबन्तकर्म)

निरूप्य ( ल्यबन्तम् ) अये ( अव्ययम् ) इयम् ( १।१ ) अपि ( अव्ययम् ) राजपुत्री ( १।१ ) [ उभौ ( २।२ ल्यबन्तकर्म ) विलोक्य ( ल्यबन्तकर्म ) ] चिरात् ( ५।१ ) खलु ( अव्ययम् ) युक्तकारी ( १।१ कर्तृविशे० ) विधि ( १।१ कर्त्ता ) स्यात् ( क्रिया )। यदि ( अव्ययम् ) युगलकम् ( २।१ कर्म ) एतत् ( २।१ कर्मविशे० ) अन्योन्यानुरूपम् ( २।१ कर्मविशे ) घटयेत् ( क्रिया )।

व्याख्या—

"पूर्वसम्भाव्य सम्प्रति निश्चयं कुर्वन्नाह अथवैति" अथवा पक्षान्तरे सन्देहेन संशयेन कृतम् अलमित्यर्थ.' व्यक्तं स्फुटम् एतेन जीमूतवाहनेनैव भवितव्यम् भवितुं योग्यम् ( मलयवतीं निरूप्याऽऽह ) अये ? इयमपि राजपुत्री। ( उभौ द्वौ विलोक्याऽऽह ) चिराद् दीर्घकालात् विधि. विधाता युक्तकारी उचितसंयोगकारी स्यात्, यदि एतद् युगलकं मिथुनम् अन्योन्यानुरूपं परस्परसदृश घटयेत् योजयेत्।

**तापसः।** अलमलम् अभ्युत्थानेन। ननु सर्वस्याभ्यागतो गुरुरिति भवानेवास्माकं पूज्यः। तद् यथासुखं स्थीयताम्।

**नायिका।** अज्ज ! पणमामि। [क]

"अभ्युत्थानेनेति" आदरनिमित्तमग्रत उत्थानमभ्युत्थानं तेन।

**तापसः।** [ नायिकां निर्दिश्य ] वत्से ! अनुरूपभर्तृगामिनी भूयाः। राजपुत्रि। त्वामाह कुलपतिः। कौशिक ! यथा अतिक्रामति मध्यन्दिनसवनवेला। तत् त्वरितमागम्यतामिति।

अनुरूपेति ' अनुरूपः सदृशो यो भर्ता पति तं गच्छति तच्छीला।

**मलयवती।** जं गुरु आणवेदि। ( आत्मगतम् ) एक्कतो गुरुवअणं अण्णतो दइअदंसणसुहंत्ति गमणागमणाधिरूढं अज्जवि मं दोलएदि हिअअं। [ख]

'एकत इति' एकतो गुरुवचनम् ' तदपि अनुल्लङ्घनीयमित्यर्थ ' अन्यतो द्वितीयतो दयितेति ' दयितस्य प्रियस्य दर्शने सुखम् तदपि दुस्त्यजम्, इत्येव गमनागमनाधिरूढं गमन च आगमनं च गमनागमने तयोरधिरूढं स्थितं हृदयम् अन्त.करणम् अद्यापि मां दोलयति भ्रमयति।

उत्थाय निश्वस्य सलज्जं सानुरागञ्च नायकं पश्यन्ती तापससहिता निष्क्रान्ता। नायकः। सोत्कण्ठं निःश्वस्य, नायिका पश्यन्।

अनया जघनाभोगभरमन्थरयातया।

---

( क ) आर्य्य ! प्रणमामि।

[ख] यद् गुरुराज्ञापयति। एकतो गुरुवचनमन्यतो दयितदर्शनसुखमिति गमनागमनाधिरूढमद्यापि मां दोलयति हृदयम्.

अन्यतोऽपि व्रजन्त्या मे हृदये निहितं पदम् ॥ १८ ॥

अनयेति"

पदच्छेदः—

अनया ( ३।१ कर्तृपदम् ) जघनाभोगभरमन्थरयातया ( ३।१ कर्तृविशे ) अन्यतः ( तसिलन्तम् ) अपि ( अव्ययम् ) व्रजन्त्या ( ३।१ कर्तृविशे ) मे ( ६।१ ) हृदये ( ७।१ ) निहितम् ( निष्ठान्तक्रिया ) पदम् ( १।१ कर्म ) ।

खण्डान्वयः—

'अनया मे हृदये पदं निहितम्' कीदृश्याऽनया ? जघनाभोगभरमन्थरयातया, पुनः कीदृश्या ? अन्यतोऽपि व्रजन्त्या ?

व्याख्या—

विरहावस्था वर्णयन्नाह—"अनयेति" जघनेति, जघनस्य श्रोणिपुरोभागस्य "जघनं च स्त्रियाः श्रोणिपुरोभागे कटावपीति मेदिनी"य आभोगःस्थौल्यं तस्य भरेण भारेण मन्थरं मन्दं यातं गमनं यस्याः तादृश्या अनया नायिकया अन्यतोऽन्यत्र स्थलेऽपीत्यर्थ व्रजन्त्या गच्छन्त्या मे मम जीमूतवाहनस्य हृदये चेतसि पदं चरणं निहितं स्थापितम् । असङ्गतिरलङ्कृतिः "कार्यकारणयोर्भिन्नदेशताय मसङ्गति" इति लक्षणात् ।

विदूषकः। भो ! दिट्ठं तुए पेक्खिदव्वं । ता दाणिं मज्झण्णसूरकिरणसन्तावदिउणिदो विअ मे उदरग्गी घमघमाअदि । ता एहि णिक्कमह्म। जेण वह्मणो अदिही भविअ मुणिजणसआसादो लद्धेहिं कन्दमूलफलेहिं पि दाव पाणधारणं करेमि । क

'दृष्टमिति' त्वया यत् प्रेक्षितव्य द्रष्टव्यं तद् दृष्टम् । ततस्मात् इदानीं मध्यान्हेति मध्यान्हस्य मध्याह्नकालस्य सूर्यकिरणैः यः सन्तापः तेन द्विगुणित इव द्विगुणता प्राप्त इव मे उदराग्नि. जठराग्निः घमघमायते प्रचण्डो भवतीत्यर्थः ।

नायकः । (ऊर्ध्वमवलोक्य) मध्यमध्यास्ते नभस्तलस्य भगवान् सहस्रदीधितिः । तथाहि—

'मध्यमिति' सहस्रदीधितिः सहस्रं दीधितयः किरणा यस्य स सूर्यो भगवान् नभस्तलस्य आकाशस्य मध्यम् 'अधिशीङ् स्थासां कर्म' इति कर्मत्वम् । अध्यास्ते अधितिष्ठति ।

तापात् तत्क्षणवृष्टचन्दनरसौ पाण्डू कपोलौ वहन्

(क) भो ! दृष्टं त्वया प्रेक्षितव्यम् । तदिदानीं मध्यान्हसूर्य्यकिरणसन्तापद्विगुणित इव मे उदराग्निर्घमघमायते । तदेहि निष्क्रामाव. । येन ब्राह्मणोऽतिथिर्भूत्वा मुनिजनसकाशात् लब्धैः कन्दमूलफलैरपि तावत् प्राणधारणं करोमि ।

संसक्तैर्निजकर्णतालपवनैः संवीज्यमानाननः ।
सम्प्रत्येष विशेषसिक्तहृदयो हस्तोज्झितैः शीकरैः
ग्लायच्छल्लकदुःसहामिव दशां धत्ते गजानां पतिः ॥ १६ ॥

इति निष्क्रान्ताः सर्वे ।

## इति प्रथमोऽङ्कः ।

' तापादिति '

पदच्छेदः—

तापात् ( ५।१ ) तत्क्षणघृष्टचन्दनरसौ ( २।२ शत्रन्तकर्मविशे. ) पाण्डू ( २।२ शत्रन्तकर्मविशे. ) कपोलौ ( २।२ शत्रन्तकर्म ) वहन् ( १।१ शत्रन्तकर्तृविशे. ) संसक्तैः ( ३।३ शानजन्तकर्तृवि. ) निजकर्णतालपवनैः ( ३।३ शानजन्तकर्तृपदम् ) संवीज्यमानाननः ( १।१ कर्तृवि. ) सम्प्रति ( अव्ययम् ) एष ( १।१ कर्तृवि. ) विशेषसिक्तहृदयः ( १।१ कर्तृवि. ) हस्तोज्झितैः ( ३।३ निष्ठान्तकर्तृवि. ) शीकरैः ( ३।३ निष्ठान्तकर्तृपदम् ) ग्लायच्छल्लकदुःसहाम् ( २।१ कर्मवि. ) इव ( अव्ययम् ) दशाम् ( २।१ कर्म ) धत्ते ( क्रिया ) गजानाम् ( ६।३ ) पतिः ( १।१ कर्तृपदम् ) ।

खण्डान्वयः—

एष गजानां पतिः सम्प्रति दशां धत्ते, कीदृशीमिव दशाम् ? ग्लायच्छल्लकदुःसहामिव, कीदृशो गजानां पतिः ? कपोलौ वहन्, कीदृशौ कपोलौ ? तत्क्षणघृष्टचन्दनरसौ, कस्मात् ? तापात्, पुनः कीदृशः ? संवीज्यमाननः, कैः ? निजकर्णतालपवनैः, कीदृशैः ? संसिक्तैः, पुनः कीदृशः ? विशेषसिक्तहृदयः, कैः ? शीकरैः, कीदृशैः ? हस्तोज्झितैः ।

व्याख्या—

मध्याह्नं वर्णयन्नाह—' तापादिति ' तापाद् घर्माद्धेतोः तत्क्षणं तत्कालं घृष्टो मर्दितश्चंदनस्य रसो निस्यन्दो याभ्यां तादृशौ, अतएव पाण्डू श्वेतौ ' हरिणः पाण्डुरः पाण्डु " रितिशुक्लनामस्वमरः, कपोलौ गण्डौ वहन् धारयन् । संसक्तैः निरन्तरचलितैः निजौ स्वकीयौ कर्णौ श्रवणौ एव तालौ तालपत्रौ तयोः पवनैर्वायुभिः संवीज्यमाननः संवीज्यमानम् आननं मुखं यस्य तादृशः, हस्तोज्झितैः हस्तेन शुण्डादण्डेन उज्झितैः शीकरैः जलकणैः ' शीकरोऽम्बुकणाः स्मृताः ' इत्यमरः विशेषसिक्तहृदयः विशेषेण अतिशयेन सिक्तम् आर्द्रीकृतं हृदयं वक्षो यस्य तादृशः, एषोऽग्रतो दृश्यमानो गजानां हस्तिनां पतिः गजराजः सम्प्रति मध्याह्नकाले ' ग्लायदिति ' ग्लायन्तो ग्लानिं प्राप्नुवन्तो ये शल्लकास्तरुविशेषाः स्तेषां दुःसहां सोढुमशक्यामिव दशाम् अवस्थाम् धत्ते धारयति । शार्दूलविक्रीडितं वृत्तम् । स्वभावोक्त्यनुप्राणित उपमालंकारः ।

इति नागानन्दीयसरस्वतीदधिमथनीनामधेयायां टीकायां प्रथमोऽङ्कः ।

ततः प्रविशति चेटी ।

चेटी । आणत्तह्मि भट्टिदारिआए मलअवदीए जहा हञ्जे ! मणोहरिए ! अज्ज चिराअदि मे भाअरो अज्जमित्तावसू । ता गदुअ जाणेहि किं आगदो ण वेत्ति । ( परिक्रामति ।

चिरयति चिरं विलम्बं करोति 'तत्करोतीति णिच्' ।

( नेपथ्याभिमुखं दृष्ट्वा ) का उण एसा तुरिततुरिदं इदो एव्व आअच्छदि । ( निरूप्य ) कहं चदुरिआ ? (क)

ततः प्रविशति द्वितीया चेटी ।

प्रथमा । ( उपसृत्य ) हला चदुरिए ! किं णिमित्तं उणमं परिहरिअ एव्वं तुरिदाए गच्छीअदि । (ख)

त्वरितत्वरित शीघ्रं शीघ्रम् ।

द्वितीया । हला मणोहरिए ! आणत्तह्मि भट्टिदारिआए मलअवदीए । हञ्जे चदुरिए ! कुसुमावचअपरिस्समणीसहं मे सरीरं । सरदादवजणिदो विअ मे सन्दावो अधिअतरं बाधेदि ।

'कुसुमेति' कुसुमाना पुष्पाणाम् अवचयोऽवचयनं तस्य परिश्रमेण निःसहं श्रमक्लान्तमित्यर्थ. एतादृशं मे शरीरम् । 'शरदिति' शरदो य आतपो घर्मः विरहत्वादिति भाव । तस्माज् जनित उत्पन्न इव सन्ताप ।

ता गच्छ तुमं बालकदलीपत्तपरिक्खित्ते चन्दणलदाघरए चन्दमणिसिलाअलं सज्जीकरेहित्ति । अणुचिट्ठिअं अ मए जधा आणत्तं । जाव गदुअ भट्टिदारिआए णिवेदेमि । ( ग )

'बालकदलीति' बालानि कोमलानि यानि कदलीपत्राणि तैः परिक्षिप्ते

---

(क) आज्ञप्तास्मि भर्तृदारिकया मलयवत्या यथा हञ्जे मनोहरिके ! अद्य चिरयति मे भ्राता आर्य्यमित्रावसु । तद् गत्वा जानीहि किमागतो न वेति । का पुनरेषा त्वरितत्वरितमित एवागच्छति । कथं चतुरिका ?

(ख) हला चतुरिके ! किं निमित्तं पुर्नमा परिहृत्या एवं त्वरितया गम्यते ।

(ग) हला मनोहरिके ! आज्ञप्तास्मि भर्तृदारिकया मलयवत्या । हञ्जे चतुरिके ! कुसुमावचयपरिश्रमनिःसहं मे शरीरम् । शरदातपजनित इव मे सन्तापोऽधिकतर बाधते । तद् गच्छत्वं बालकदलीपत्रपरिक्षिप्ते चन्दनलतागृहे चन्द्रमणिशिलातल सज्जीकुर्विति । अनुष्ठितञ्च मया यथाज्ञप्तम् । यावद् गत्वा भर्तृदारिकायै निवेदयामि ।

आच्छादिते एतादृश चन्दनलतागृहे चन्दनतरुलतानिर्मितगृहे । 'चन्द्रेति' चन्द्रमणिशिलातलं चन्द्रमणिश्चन्द्रकान्तो यस्मादुदयं गते शीतरश्मौ मन्दं मन्दं जलं निर्झरति तस्य शिलातलम् ।

प्रथमा । जइ एव्वं ता लहुं गदुअ णिवेदेहि । जेण से तहिं गदाए उवसमदि सन्दावो । (क)

द्वितीया । [विहस्यात्मगतम्] ण ईदिसो से सन्दावो । जो एव्वं उवसमिस्सदि । विचित्तरमणीअं चन्दणलदाघरअं पेक्खन्तीए अधिअदरो सन्दावो हुविस्सदित्ति तक्केमि । [प्रकाशम्] ता गच्छ तुमं । अहम्पि सज्जीकिदं मणिसिलाअलंत्ति गदुअ भट्टिदारिआए णिवेदेमि । (ख)

इति निष्क्रान्ते ।

ततः प्रविशति सोत्कण्ठा मलयवती चेटी च ।

मलयवती । [निःश्वस्यात्मगतम्] हिअअ ! तधा णाम तस्सिं जणे जं लज्जाए मन्थरं मुहं अदुअ दाणिं तहिं अत्तणा गदोसित्ति अहो ! दे अप्पम्भरित्तणं । [प्रकाशम्] हञ्जे चदुरिए ! आदेसेहि मे भअवदीए आअदणं । (ग)

'हृदयेति' हे हृदय ! चेतः ! 'नाम सम्भावनायाम्' तस्मिन् पूर्वदृष्टे जने जीमूतवाहन इति भावः ! तथा तेनैव प्रकारेण वर्त्तस इति शेषः । यत् त्वं लज्जया मन्थरं मन्दं नीचैरित्यर्थः । मुखं कृत्वा । तापसेन साकं निष्क्रान्त मासीरिति शेष । क्वचिन्न दोषो न गुण इति दर्पणवचनादित्यत्र न्यूनपदत्वस्य विरहातिशयवर्णनान्न दोषत्वं नापि गुणत्वम् । इदानीं सम्प्रति तत्रजने आत्मना स्वयमेव गतोऽसि, अहो आश्चर्यं ते तव हृदयस्य आत्मम्भरित्वं स्वार्थपरत्वं स्वप्रयोजनप्रायणत्वमिति यावत् । चन्दनलतागृहगमनोद्यताया भगवतीगृहगमनत्वकथनेन विप्रलम्भश्रृङ्गारे दशकामदशासु प्रलापो दर्शित. तल्लक्षणं यथा दर्पणे 'अलक्ष्यवाक् प्रलापः स्याच्चेतसो भ्रमणाद्भृशम्' । अलक्ष्यवाक् च हृदयेत्यादिव क्ये दर्शिता ।

चेटी । [आत्मगतम्] चन्दणलदाघरं पत्थिदा भणादि भअ-

---

(क) यद्येवं तल्लघु गत्वा निवेदय । येनास्यास्तत्र गताया उपशाम्यति संतापः ।

(ख) नेदृशस्तस्याः सन्तापः । य एवमुपशमिष्यति । विचित्ररमणीयं चन्दनलतागृहं प्रेक्षमाणाया अधिकतरः सन्तापो भविष्यतीति तर्कयामि । तद्गच्छ त्वम् । अहमपि सज्जीकृतं मणिशिलातलमिति गत्वा भर्तृदारिकायै निवेदयामि ।

(ग) हृदय ! तथा नाम तस्मिन् जने यत् लज्जया मन्थरं मुखं कृत्वेदानीं तत्रात्मना गतोऽसीति अहो ! ते आत्मम्भरित्वम् । हञ्जे चतुरिके ! आदिश मह्यं भगवत्या आयतनम् ।

वदिए आअदणं। [ प्रकाशम् ] चन्दणलदाघरअं भट्टिदारिआ-
पत्थिदा (क)

नायिका। [ सलज्जम् ] हञ्जे! सुट्ठु सुमराविदं । ता एहि तहिं
एव्व गच्छह्म। (ख)

चेटी। एदु एदु भट्टिदारिआ। [ नायिका अन्यतोगच्छति। (ग)

चेटी। [पृष्ठतो दृष्ट्वा सोद्वेगमात्मगतम् ] अहो से सुण्णहिअअ-
त्तणं। कहं तं एव्व देवीभवणं पत्थिदा। [ प्रकाशम् ] भट्टिदारिए।
णं इदो चन्दणलदाघरअं। ता इदो इदो एहि। (घ)

६ नायिका सविलक्षस्मितं तथा करोति।

चेटी। इदं चन्दणलदाघरअं। ता पविसिअ चन्दमणिसिलादले
उपविसिअ समस्ससदु भट्टिदारिआ [ उभे उपविशतः ] (ङ)

'सविलक्षस्मितमिति' विलक्षेण विस्मययुक्तत्वेन स्मितेन ईषद्धसनेन च सह
यथास्यात्तथा 'विलक्षो विस्मयान्विते' इत्यमरः।

नायिका। [ निश्वस्य आत्मगतम् ] भअवं कुसुमाउह! जेण
तुमं रूअसोहाए णिज्जिदोसि। तस्स तुए ण किम्पि किदं। मम उण
अणवरद्धाएवि अवलेत्ति करिअ पहरन्तो ण लज्जेसि [ आत्मानं
निर्वर्ण्य मदनावस्थां नाटयन्ती। [ प्रकाशम् ] हञ्जे! कीस उण घण
पल्लवणिरुद्धसूराकिरणं तं एव्व चन्दणलदाघरअं ण मे अज्जवि
सन्दावदुक्खं अवणेदि। (च)

'घनेति' घनैः सान्द्रैः पल्लवैः किसलयैः निरुद्धा निवारिताः सूर्यकिरणा यत्र
तादृशं चन्दनलतागृहम्।

---

(क) चन्दनलतागृहे प्रस्थिता भणति भगवत्या आयतनम्। चन्दनलता-
गृहं भर्तृदारिका प्रस्थिता।

(ख) हञ्जे! सुष्ठु स्मारितम्। तदेहि तत्रैव गच्छावः।

(ग) एतु एतु भर्तृदारिका।

(घ) अहो तस्याः शून्यहृदयत्वम्! कथं तदेव देवीभवनं प्रस्थिता। भर्तृ-
दारिके! नन्वितश्चन्दनलतागृहम्। तदित इत एहि।

(ङ) इदं चन्दनलतागृहम्। तत् प्रविश्य चन्द्रमणिशिलातले उपविश्य
समाश्वसितु भर्तृदारिका।

(च) भगवन् कुसुमायुध! येन त्वं रूपशोभया निर्जितोसि। तस्य त्वया
न किमपि कृतम्। मम पुनरनपराद्धाया अपि अवलेति कृत्वा प्रहरन् न लज्जसे
हञ्जे! किं पुनर्घनपल्लवनिरुद्धसूर्य्यकिरणं तदेव चन्दनलतागृहं न मे अद्यापि
सन्तापदुःखमपनयति॥

चेटी । जाणामि अहं एत्थ सन्दावस्स कारणं । किं उण अस-म्भाविणी भट्टिदारिआ ण तं पडिवज्जिस्सदित्ति । (क)

'जानामीति' अत्र सन्तापस्य कारणं हेतु जीमूतवाहनम्, अहं जानामि, पुनः किम् असम्भाविनी स मे पतिर्भविष्यति ? इत्यसम्भवं मन्यमाना भर्तृदारिका तत् मदभिप्रेतं न प्रतिपत्स्यते स्वीकरिष्यति ? ।

नायिका । [ आत्मगतम् ] लज्जिदा विअ अहं एदाए । तहावि पुच्छिस्सं [ प्रकाशम् ] हञ्जे ! किं तं जं ण पडिवज्जिअदि । ता कहेहि दाव । किं तं कारणं ? ( ख )

चेटी । एसो दे हिअअट्ठिदो वरो । ( ग )

नायिका । [ सहर्षं ससम्भ्रमोत्थाय द्वित्राणि पदानि गत्वा ] कहिं कहिं सो ? ( घ )

चेटी । [ उत्थाय सस्मितम् ] भट्टिदारिए ! सो को ? ( ङ )

नायिका । सलज्जमुपविश्य अधोमुखी तिष्ठति ।

चेटी । भट्टिदारिए ! एदह्मि वत्तुकामा । एसो दे हिअअट्ठिदो वरो एव्व देवीए दिण्णो सिविणके । पच्छाविक्खणं एव्व परिमुक्क-कुसुमबाणो विअ मअरद्धओ भट्टिदारिआए दिट्ठो । सो दे इमस्स सन्दावस्स कारणं जेण एदं सहावसीदलम्पि चन्दणलदाघरअं ण दे सन्दावदुक्खं अवणेदि । ( च )

'पश्चादिति' पश्चादपि स्वप्ने देवीवरदानानन्तरमपि प्रविमुक्तेति, प्रविमुक्ता परिक्षिप्ता. कुसुमबाणाः पुष्पशरा येन एतादृशो मकरध्वज इव कामदेव इव जीमूत-वाहन इतिशेषः । त्वया दृष्टः ।

---

( क ) जानाम्यहमत्र सन्तापस्य कारणम् । किं पुनरसम्भाविनी भर्तृदारिका । तत् प्रतिपत्स्यते इति ।

( ख ) लज्जितेवाहमेतया । तथापि पृच्छामि । हञ्जे किं तत् यन्न प्रतिपद्यते । तत् कथय तावत् । किं तत् कारणम् ?

( ग ) एष ते हृदयस्थितो वरः ।

( घ ) कुत्र कुत्र सः ?

( ङ ) भर्तृदारिके ! स कः ।

( च ) भर्तृदारिके ! एतदस्मि वक्तुकामा एष ते हृदयस्थितो वर एव देव्या दत्तः स्वप्ने । पश्चादपि क्षणमेव प्रविमुक्तकुसुमबाण इव मकरध्वजो भर्तृदारिकया दृष्टः । स ते अस्य सन्तापस्य कारणम् । येनैतत् स्वभावशीतलमपि चन्दनलता-गृहं न ते सन्तापदुःखमपनयति ।

नायिका। चदुरिआए लक्खिदह्मि। सच्चं हञ्जे! चदुरिआ क्खु
मं। किं दे अवरं पच्छाईअदि। ता कहिस्सं। (क)

चेटी। भट्टिदारिए! दाणिं एव्व कहिदं। किं बहुणा पलवि-
ए। अलं सम्भमेण। मा सन्तप्प। जइ अहं चदुरिआ तदा सोवि
ट्टिदारिअं अवेक्खन्तो ण मुहुत्तअं पि अहिरमिस्सदि। ता एदम्पि
ए लक्खिदं। (ख)

न अभिरस्यते न विरामं करिष्यति, त्वां मिलितुमुत्कण्ठित एव भवि-
यतीत्यर्थ।

नायिका। [सास्रम्] हञ्जे! कुदो अम्हाणं एत्तिओ भाअ-
ओ। (ग)

चेटी। भट्टिदारिए! मा एव्वं भण। किं मधुसुअणो विअ
च्छत्थलेण लच्छिं अणुव्वहन्तो णिव्वुदो भोदि। (घ)

'मधुसूदन इति' यथा मधुसूदनो विष्णु लक्ष्मीं वक्षस्थलेन भुजान्तरस्थ-
लेन अनुद्वहन् न धारयन् निवृत्तो न भवति तथा सोऽपि त्वां विनेति भावः।

नायिका। किं सुअणो पिअं वज्जिअ अण्णं भणिदुं जाणेदि।
सहि! अदोवि मे सन्दावो अधिअदरं बाधेदि। जं सो महाणुभाओ
वाआमेत्तकेण वि मए ण सम्भाविदो सोवि अकिदपड़िवत्तो अदक्-
खिणेत्ति मं सम्भावइस्सदि [इति रोदिति] (ङ)

'अकृतेति' न कृता प्रतिपत्ति सत्कारो यया सा, अदक्षिणा असरला कुटि-
लेति यावत् 'दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्तिषु' इति मेदिनी।

चेटी। भट्टिदारिए मा रोद। अहवा कहं ण रोइस्सदि। अहिओ
से हिअअस्स सन्दावो अधिअदरं बाधेदि ता किं दाणीं एत्थ कर-

---

(क) चतुरिकया लक्षितास्मि। सत्यं हञ्जे! चतुरिका खलु त्वम्। किं ते
अपरं प्रच्छाद्यते। तत् कथयिष्यामि।

(ख) भर्तृदारिके! इदानीमेव कथितम्। किं बहुना प्रलपितेन अलं सम्भ्रमेण
मा सन्तप्यस्व। यद्यहं चतुरिका तदा सोऽपि भर्तृदारिकाम् अपेक्षमाणो न मुहूर्त-
मप्यभिरंस्यते। तदिदमपि मया लक्षितम्।

(ग) हञ्जे! कुतोऽस्माकमेतावद्भागधेयम्।

(घ) भर्तृदारिके! मैव भण। किं मधुसूदन इव वक्षस्थलेन लक्ष्मीमनु-
द्वहन् निर्वृतो भवति।

(ङ) किं सुजन प्रियं वर्जयित्वा अन्यत् भणितुं जानाति। सखि! अतोऽपि
मे सन्तापोऽधिकतर बाधते। यत् स महानुभावो वाङ्मात्रेणापि मया न सम्भा-
वित.। सोऽप्यकृतप्रतिपत्तिरदक्षिणेति सम्भावयिष्यति।

इस्सं। ता जाव चन्दणलदापल्लवरसं से हिअए दाइस्सं [ उत्थाय चन्दनपल्लवं गृहीत्वा निष्पीड्य हृदये ददाति ] भट्टिदारिए ! णं भणामि मा रोद। अअं क्खु ईदिसो चन्दणरसो इमेहिं अणवरपड्न्तेहिं वाहविन्दूहिं उण्हीकिदो ण दे हिअअस्स एदं सन्दावं अवणेदि [ कदलीपत्रमादाय वीजयति ] (क)

' अनवरतेति ' अनवरत निरन्तरं पतद्भिः वाष्पविन्दुभिः नेत्रजलबिन्दुभि ।

नायिका। [ हस्तेन निवारयति ] सहि ! मा वीजेहि। उण्हो क्खु एसो कदलीदलमारुदो। ( ख )

चेटी। भट्टिदारिए ! मा इमस्स दोसं कहेहि। तुमं चिअचन्दण पल्लवसंसग्गसीदलं इमं णीसासेहिं पपञ्चिअ कअलीदलमारुदं उण्हं कुणासि। ( ग )

' चितेति ' चिताः चयनक्रमेण स्थापिता ये चन्दनपल्लवास्तेषां संसर्गेण सम्पर्केण शीतलं शीतं कदलीदलमारुतं कदलीपत्रपवनं निःश्वासैः वदनवातैः प्रपञ्च्य सयोज्य उष्णं तप्तं करोषि।

नायिका। ( सास्रम् ) सहि ! अत्थि कोवि इमस्स दुक्खस्स उवसमोवाओ। ( घ )

चेटी। भट्टिदारिए ! अत्थि जदि सो एत्थ आअच्छदि। ( ङ )

ततः प्रविशति नायको विदूषकश्च।

नायकः।

व्यावृत्यैव सितासितेक्षणरुचा तानाश्रमे शाखिन
कुर्वन्त्या विटपावसक्तविलसत्कृष्णाजिनौघानिव।
यद्दृष्टोस्मि तया मुनेरपि पुरस्तेनैवमभ्याहते
पुष्पेषो ! भवता मुधैव किमिति क्षिप्यन्त एते शराः॥ २०॥

' व्यावृत्येति '

---

(क) भर्तृदारिके ! मा रुदिहि। अथवा कथ न रोदिष्यति। अधिकोऽस्या हृदयस्य सन्तापोऽधिकतरं बाधते। तत् किमिदानीमत्र करिष्ये। तद् यावत् चन्दनलतापल्लवरसमस्यास्हृदये दास्ये। भर्तृदारिके ! ननु भणामि मा रुदिहि। अयं खल्वीदृशश्चन्दनरस एभिरनवरतपतद्भिः वाष्पबिन्दुभिरुष्णीकृतो न ते हृदयस्य एतं सन्तापमपनयति।

(ख) सखि ! मा वीजय। उष्ण. खल्वेष कदलीदलमारुतः।

( ग ) भर्तृदारिके ! मा अस्य दोष कथय। त्वं चितचन्दनपल्लवसंसर्गशीतलम् इमं निःश्वासैः प्रपञ्चय कदलीदलमारुतम् उष्णं करोषि।

( घ ) सखि ! अस्ति कोऽपि अस्य सन्तापस्योपशमोपायः।

( ङ ) भर्तृदारिके ! अस्ति यदि सोऽत्रागच्छति।

पदच्छेदः—

व्यावृत्य ( ल्यबन्तम् ) एव ( अव्ययम् ) सितासितेक्षणरुचा ( ३।१ करणम् ) तान् ( २।३ शत्रन्तकर्मविशे. ) आश्रमे ( ७।१ ) शाखिनः ( २।३ शत्रन्तकर्म ) कुर्वन्त्या ( ३।१ शत्रन्तं निष्ठान्तकर्तृविशे. ) विटपावसक्तविलसत्कृष्णाजिनौघान् ( २।३ शत्रन्तकर्म्मोपमानम् ) इव ( अव्ययम् ) यद् ( १।१ ) दृष्टः ( निष्ठान्तम् ) अस्मि ( क्रिया ) तया ( ३।१ निष्ठान्तकर्तृपदम् ) मुनेः (६।१) अपि ( अव्ययम् ) पुरः ( अव्ययम् ) तेन ( ३।१ हेतु. ) एवम् ( अव्ययम् ) अभ्याहते ( ७।१ आधारविशे. ) पुष्पेषो ( सम्बोधनम् ) भवता ( ३।१ कर्तृप. ) मुधा ( अव्ययम् ) एव ( अव्ययम् ) किम् ( १।१ ) इति ( अव्ययम् ) क्षिप्यन्ते ( क्रिया ) एते ( १।३ कर्मवि. ) शराः ( १।३ कर्म )।

व्याख्या—

नायिकाया विरहावस्थां प्रदर्श्य नायकस्यापि प्रदर्शयति 'व्यावृत्येति' हे पुष्पेषो ? कामदेव ? आश्रमे वने मठे वा 'आश्रमौ ब्रह्मचर्यादौ वानप्रस्थे मठेवने' इति मेदिनी। मुनेः शाण्डिल्यनाम्नस्तापसस्य पुरोऽग्रतोपि सितेति, सितं श्वेतम् असितं कृष्णं च यद् ईक्षणं नयनं तस्य रुचा कान्त्या तान् अनुभूतच्छायान् शाखिनो वृक्षान् विटपेति विटपे शाखापल्लवसमुदाये 'विस्तारो विटपोऽस्त्रिया' मित्यमरः। 'विटपो न स्त्रियां स्तम्बशाखाविस्तारपल्लवे' इति च मेदिनी। अवसक्ता लग्ना विलसन्तः स्फुरन्तः कृष्णाजिनानां कृष्णमृगचर्मणाम् ओघाः समूहा येषां तादृशानिव कुर्वन्त्या तया कान्तया व्यावृत्य मुखं परावर्त्यैव यद् दृष्टोऽवलोकितोऽस्मि, तेन तदवलोकनमात्रेणैव एवम् अनेन प्रकारेण अभ्याहते समन्ताद् हते ताडिते मयि जीमूतवाहने भवता कुसुमशरेण मुधा वृथैव किमिति किमर्थम् एते शराः बाणाः क्षिप्यन्ते पात्यन्ते। पूर्वमेव हते भूयः प्रहारो नोचित इति भावः॥२०॥ शार्दूलविक्रीडितं वृत्तम् उत्प्रेक्षालंकारः।

विदूषकः। भो वअस्स ! कहिं क्खु दे गदं तं धीरत्तणं ? (क)

नायकः। वयस्य ! ननु सुधीर एवास्मि, कुतः—

नीताः किं न निशाः शशाङ्कधवला ? नाघ्रातमिन्दीवरम् ?
किं नोन्मीलितमालतीसुरभयः सोढाः प्रदोषानिलाः ?
झङ्कारः कमलाकरे मधुलिहां किं वा मया न श्रुतो ?
निर्व्याजं विधुरेष्वधीर इति मां येनाभिधत्ते भवान्॥२१॥

'नीता इति'

पदच्छेदः—

नीताः ( १।३ निष्ठान्तम् ) किम् ( १।१ ) न ( अव्ययम् ) निशाः ( १।३

(क) भो वयस्य ! कुत्र खलु ते गतं तत् धीरत्वम् ?

निष्ठान्तकर्म ) शशाङ्कधवलाः ( १।३ निष्ठान्तकर्मविशे. ) न ( अव्ययम् ) आघ्रातम् ( १।१ निष्ठान्तम् ) इन्दीवरम् ( १।१ निष्ठान्तकर्म ) । किम् ( १।१ ) न ( अव्ययम् ) उन्मीलितमालतीसुरभयः ( १।३ निष्ठान्तकर्मविशे. ) सोढाः ( १।३ निष्ठान्तम् ) प्रदोषानिलाः ( १।३ निष्ठान्तकर्म ) झङ्कारः ( १।१ निष्ठान्तकर्म ) कमलाकरे ( ७।१ ) मधुलिहाम् ( ६।३ ) किम् ( १।१ ) वा ( अव्ययम् ) मया निष्ठान्तकर्तृपदम् ) न ( अव्ययम् ) श्रुतः ( १।१ निष्ठान्तम् ) निर्व्याजम् (क्रियाविशेषणम् ) विधुरेषु ( ७.३ ) अधीरः ( १।१ ) इति ( अव्ययम् ) माम् ( २।१ कर्म. ) येन ( ३।१ हेतु. ) अभिधत्ते ( क्रिया ) भवान् ( १।१ कर्तृप. )

व्याख्या—

स्वीयं सुधीरत्वं द्रढयति ' नीता इति ' मयेति पदं सर्वनिष्ठान्तपदैः सम्बध्यते। किं मया शशाङ्कधवलाः शशाङ्केन चन्द्रमसा धवलाःशुभ्रवर्णा निशा रात्रयो न नीता अतिक्रान्ता इत्यर्थः ? अपि तु नीता एव । किं मया इन्दीवरं नीलकमलं अतिशयेन कामोद्दीपिकरत्वात् । न आघ्रातं शिङ्घितं घ्राणेन्द्रियविषयीकृतमिति यावत् ? आघ्रातमेवेत्यर्थः । किं मया । ' उन्मीलितेति ' उन्मीलिताभिः विकसिताभिः मालतीभिः उत्कृष्टगन्धान्वितकुसुमविशेषैः सुरभयः सुगन्धयः प्रदोषानिलाः प्रदोषस्य सन्ध्याकालस्य ' प्रदोषो रजनीमुख ' मित्यमरः । अनिला वायवो न सोढाः क्षान्ताः ? अपि तु सोढा एव । किं मया कमलाकरे सरसि मधुलिहां भ्रमराणा झङ्कारो निरन्तरमधुरध्वनिः न श्रुत आकर्णितः ? अपि तु श्रुत एवेत्यर्थः । येन हेतुना भवान् विदूषकः निर्व्याजं निष्कपटम् अनिरोधमित्यर्थः । विधुरेषु कातरेषु अधीरः कातर इत्येवं मा जीमूतवाहनम् अभिधत्ते वदति ॥ २१ ॥ शार्दूलविक्रीडितं वृत्तम् । काकुवक्रोक्तिः ।

[विचिन्त्य] । अथवा मृषा नाभिहितं, वयस्यात्रेय ! नन्वधीर एवास्मि—

' अथवेति ' अथवा पक्षान्तरे मृषा असत्यं नाभिहितं न कथितम् ।

स्त्रीहृदयेन न सोढाः क्षिप्ताः कुसुमेषवोऽप्यनङ्गेन ।
येनाद्यैव पुरस्तव वदामि धीर इति स कथमहम् ॥ २२ ॥

'स्त्रीहृदयेनेति'

पदच्छेदः—

स्त्रीहृदयेन ( ३।१ निष्ठान्तकर्तृप. ) न ( अव्ययम् ) सोढाः ( १।३ निष्ठान्तम् ) क्षिप्ताः ( १।३ निष्ठान्तं निष्ठान्तकर्मविशे. ) कुसुमेषव ( १।३ निष्ठान्तकर्म ) अपि ( अव्ययम् ) अनङ्गेन ( ३।१ निष्ठान्तकर्मविशेषणाकर्तृप. ) येन ( ३।१ ) अद्य ( अव्ययम् ) एव ( अव्ययम् ) पुरः ( अव्ययम् ) तव ( ६।१ ) वदामि ( क्रिया ) धीरः ( १।१ ) इति ( अव्ययम् ) सः ( १।१ कर्तृवि. ) कथम् ( अव्ययम् ) अहम् ( १।१ कर्तृप. ) ।

व्याख्या—

अधीरतामेव प्रकटयति "स्त्रीहृदयेनेति" स्त्रीहृदयेन स्त्रियां कान्तायां हृदयं यस्य तादृशेन मया अथवा स्त्रीणां हृदयमिव हृदयं यस्य तादृशेन अतिकातरेणेत्यर्थः । मया अनङ्गेन अङ्गाभाववता कामेन क्षिप्ता मुक्ताः कुसुमेषवः पुष्पमयबाणा अपि न सोढाः । येन कारणेन अद्यैव तव पुरोऽपतः सोऽहं धीर इति निपातेनाभिहितत्वात्कर्मणि प्रथमा । कथं केन प्रकारेण वदामि कथयामि । इत्यत्र अनङ्गेन किमुत बलवच्छरीरवता, कुसुमेषवोऽपि किमुत लोहशरा इति अनङ्गेति अपीति च पदद्वयस्य व्यञ्जकत्वम् ॥ २२ ॥ अनुष्टुब्वृत्तम् ॥

विदूषकः । [ आत्मगतम् ] एव्वमधीरत्तणं पडिवज्जन्तेण आचक्खिदो महान्तो अणेण हिअअस्स आवेगो । ता जाव कहिं एव्व पदं अवक्खिवामि । [ प्रकाशम् ] भो वअस्स । कीस उण अज्ज तुमं लहुं जेव्व गुरुअणं सुस्सूसिअ इह आगदो ? ( क )

'अधीरत्वमिति' अधीरत्वं कातरत्वं प्रतिपाद्यमानेन कथयता अनेन जीमूतवाहनेन हृदयस्य महान् आवेग उत्कण्ठाविशेष आख्यातः प्रकटितः । क्वापि अन्यत्र विषये ।

नायकः । वयस्य ! स्थाने प्रश्नः, कस्य वान्यस्यैतत् कथनीयम्, अद्य खलु स्वप्ने जानामि—सैव प्रियतमा । [ अङ्गुल्या निर्दिशन् ] अत्र चन्दनलतागृहे चन्द्रकान्तमणिशिलायामुपविष्टा प्रणयकुपिता किमपि मामुपालभमानेव रुदती मया दृष्टा ।

'प्रणयेति' प्रणयेन अकारण प्रेम्णा कुपिता क्रुद्धा उपालभमानेव उपालम्भं ददतीव ।

तदिच्छामि स्वप्नानुभूतदयितासमागमरम्ये अस्मिश्चन्दनलतागृहे दिवसशेषं समतिवाहयितुम्, तदेहि गच्छावः । [ परिक्रामतः ]

"स्वप्नेति" स्वप्ने अनुभूत साक्षात्कृतो य प्रियासमागमः प्रियासंयोगः तेनैव हेतुना रम्ये मनोहरे । समतिवाहयितुं सम्यग् व्यत्येतुम् ॥

चेटी । [ कर्णं दत्त्वा ससम्भ्रमम् ] भट्टिदारिए ! पदसद्दो विअ । ( ख )

नायिका । [ ससम्भ्रममात्मानं पश्यन्ती ] हञ्जे ! मा ईदिसं आआरं पेक्खिअ कोवि मे हिअअं तुलइस्सदि ता उट्ठेहि, इमिणा रत्ता-

---

( क ) एवमधीरत्वं प्रतिपाद्यमानेन आचष्टो महाननेन हृदयस्यावेग । तत् यावत् कुत्रैव एनम् अपक्षिपामि । भो वयस्य ! कथं पुनरद्य त्वं लघ्वेव गुरुजनं शुश्रूषित्वा इहागत ?

( ख ) भर्तृदारिके ! पदशब्द इव ।

सोअपादवेण अन्तरिदाअ पेक्खह्म दाव को एसोत्ति। (क) तथा कुरुतः ]।

'रक्तेति' रक्ताशोकपादपेन रक्ताशोकवृक्षेण अन्तरिते व्यवहिते आव मिति शेषः। अन्तरिते इति प्रथमाद्विवचनान्तं पदम्।

विदूषकः। एदं चन्दणलदाघरअं। ता एहि पविसह्म। (ख) [ नाट्येन प्रविशतः ]।

नायकः।

चन्दनलतागृहमिदं सचन्द्रमणिशिलमपि प्रियं न मम।
चन्द्राननया रहितं चन्द्रिकया मुखमिव निशायाः॥ २३॥

'चन्दनेति'

पदच्छेदः—

चन्दनलतागृहम् (१।१ कर्तृ) इदम् (१।१ कर्तृवि.) सचन्द्रमणिशिलम् (१।१ कर्तृवि.) अपि (अव्ययम्) प्रियम् (१।१ कर्तृवि.) न (अव्ययम्) मम (६।१) चन्द्राननया (३।१ निष्ठान्तकर्तृप.) रहितम् (१।१ निष्ठान्तं कर्तृवि) चन्द्रिकया (३।१ निष्ठान्तकर्तुरुपमानम्) मुखम् (१।१ कर्तुरुपमानम्) इव (अव्ययम्) निशायाः (६।१)।

व्याख्या—

चन्दनलतागृहं शून्यं सम्भाव्याऽऽह 'चन्दनेति' 'सचन्द्रेति' चन्द्रमणिशिलया सहितं सचन्द्रमणिशिलम् एतादृशमपि इदम् अग्रे वर्त्तमानं चन्दनलतागृहं चन्द्राननया चन्द्र इव आननं मुखं यस्यास्तया शशिवदनया मत्प्राणप्रिययेत्यर्थ रहितं शून्यं सत् चन्द्रिकया कौमुद्या 'चन्द्रिकाकौमुदी ज्योत्स्ना' इत्यमरः रहितं निशाया रात्रेः मुखमिव मम प्रियाविरहितस्य जीमूतवाहनस्य प्रियं मनोज्ञ नास्ति॥ २३॥ आर्यावृत्तम्। उपमालङ्कारः।

[ चेटी दृष्ट्वा ]। भट्टिदारिए! दिट्ठिआ वड्ढसि। सो एव्व णं दे हिअअवल्लहो जणो (ग)

नायिका [ दृष्ट्वा सहर्षंससाध्वसञ्च ] हञ्जे! एदं पेक्खिअ अदिसज्झसेण ण सक्कुणोमि इह एव्व आसणे चिट्ठिदुं, कदापि एसो पेक्खदि, ता एहि अण्णदो गच्छह्म।

---

(क) हञ्जे! मा ईदृशमाकारं प्रेक्ष्य कोऽपि मे हृदयं तुलयिष्यति, तदुत्तिष्ठ अनेन रक्ताशोकपादपेन अन्तरिते प्रेक्षावहे तावत् क एष इति।

(ख) इदं चन्दनलतागृहम्। तदेहि प्रविशाव।

(ग) भर्तृदारिके! दिष्ट्या वर्धसे! स एव ननु ते हृदयवल्लभो जनः।

[ सोत्कण्ठं पदं गत्वा ] हञ्जे ! वेवदि मे ऊरू [ क ]

'वेपत इति' वेपते कम्पते मे ऊरु सक्थि 'सक्थि क्लीबे पुमानूरु' रित्यमर ।

चेटी । [ विहस्य ] अइ काइरे ! इह ठ्ठिदं तुमं को पेक्खदि ? णं विसुमरिदो दे अअं रत्तासोअपादवो, ता इह एव्व उवविसिअ चिठ्ठह्म ( ख ) । [ तथा कुरुतः ] ।

विदूषक [ निरूप्य ] भो वअस्स ! एसा सा चन्दमणिसिला? (ग)

नायक । सबाष्पं नि श्वसिति ।

चेटी । भट्टिदारिए ! जाणामि सिविणआलावो विअ । ता अवहिदा दाव सुणह्म ( घ ) [ उभे आकर्णयत ] ।

'स्वप्नालाप इति' स्वप्नस्य आलापो वार्त्तालाप इव ।

विदूषकः [ हस्तेन चालयन् ] भो वअस्स ! णं भणामि एसा सा चन्दमणिसिलेत्ति ( ङ )

नायक । [ सबाष्पं निःश्वस्य ] सम्यगुपलक्षितम् । [ हस्तेन निर्दिश्य ]

शशिमणिशिला सेयं यस्यां विपाण्डुरमाननं
करकिसलये कृत्वा वामे घनश्वसितोद्गमा ।
चिरयति मयि व्यक्ताकूता मनाक् स्फुरिताधरा
विरमितमनोमन्युर्दृष्टा मया रुदती प्रिया ॥ २४ ॥

'शशिमणिशिलेति'

पदच्छेद —

शशिमणिशिला ( १।१ ) सा ( १।१ इयम् ( १।१ ) यस्याम् ( ७।१ ) विपाण्डुरम् ( २।१ क्त्वान्तकर्मवि. ) आननम् ( २।१ क्त्वान्तकर्म ) करकिसलये ( ७।१ आधार ) कृत्वा ( क्त्वान्तम् ) वामे ( ७।१ आधारवि. ) घनश्वसितोद्गमा ( १।१ निष्ठान्तकर्मवि. ) मनाक् ( अव्ययम् ) स्फुरिताधरा ( १।१ निष्ठान्तकर्मवि. ) विरमितमनोमन्यु ( १।१ निष्ठान्तकर्मवि. ) दृष्टा ( १।१ निष्ठान्तम् ) मया ( ३।१ निष्ठान्तकर्तृप ) रुदती ( १।१ शत्रन्तं निष्ठान्तकर्मवि. ) प्रिया

---

(क) हञ्जे एनम्प्रेक्ष्य अतिसाध्वसेन न शक्नोमि इहैवासन्ने स्थातुम्, कदापि एष प्रेक्ष्यते । तदेहि अन्यतो गच्छाव । हञ्जे ! वेपते मे उरु ।

(ख) अयि कातरे ! इह स्थिता त्वा क प्रेक्षते ? ननु विस्मृतस्ते अयं रक्ताशोकपादप, तदिहैव उपविश्य तिष्ठाव ।

(ग) भो वयस्य ! एषा सा चन्द्रमणिशिला ।

(घ) भर्तृदारिके ! जानामि स्वप्नालाप इव, तदवहिते तावच्छृणुव ।

(ङ) भो वयस्य ! ननु भणामि । एषा सा चन्द्रमणिशिलेति ।

( ११ निष्ठान्तकर्म ) ।

व्याख्या—

स्वप्नदृष्टचन्द्रकान्तशिलागृहे विद्यमानां प्रियां वर्णयति 'शशीति' सा पूर्वा नुभूता इयं शशिमणिशिला चन्द्रकान्तमणिशिला, यस्यां मया जीमूतवाहनेन वामे दक्षिणेतरे करकिसलये हस्तपल्लवे 'पल्लवोऽस्त्री किसलय' मित्यमरः । विपाण्डुरं· विरहत्वादीषत्पीतम् आननं मुखं कृत्वा । धृत्वेत्यर्थः । घनश्वसितोद्गमा घनाना सान्द्राणां श्वसितानां निश्वासानाम् उद्गम उद्गमनं यस्यास्तादृशी, मयि तत्प्रिये जीमूतवाहने चिरयति । शत्रन्तम् । चिरं कुर्वति सति व्यक्ताकूता व्यक्तः प्रकटित आकूतो हृदयाभिप्रायो यया तादृशी, मनाक् ईषत् स्फुरिताधरा स्फुरितोऽधरोऽधोव र्त्योष्ठो यस्यास्तादृशी । कोपत्वादिति भावः । विरमितमनोमन्यु विरमित. प्रशमितो मनसो मन्युः कोपो यया तादृशी । 'मन्युर्दैन्ये क्रतौ क्रुधि' इत्यमर । शोकस्तु रोदनेन प्रकटित एव । एतादृशी प्रिया कान्ता रुदती रोदनं कुर्वती सती दृष्टाऽवलोकिता ॥ २४ ॥ हरिणीवृत्तम् 'रसयुगहयैर्नसौ म्रौ स्लौ गा यदा हरिणी तदा' इति लक्षणात् । अनुप्रासालङ्कारः 'वर्णसाम्यमनुप्रास' इति लक्षणात् ।

ततस्तस्यामेव चन्द्रमणिशिलायाम् उपविशावः। [उभावुपविशतः]

नायिका [ विचिन्त्य ] का उण एसा हुविस्सदि ? ( क )

चेटी । भट्टिदारिए जधा अम्हे ओवारिदाव एदं पेक्खह्म, मा णाम तुमम्पि एव्वं दिट्ठा ( ख ) ।

अपवारिते निभृते आच्छन्ने इत्यर्थ. ।

नायिका । जुज्जदि एदं, किं उण पणअकुविदं पिअअणं हिअए करिअ मन्तेदि ? ( ग ) ।

चेटी । भट्टिदारिए ! मा ईदिसिं सङ्कं करेहि, पुणोवि दाव सुणह्म ( घ ) ।

विदूषक [ आत्मगतम् ] अहिरमदि एसो एदाए कधाए, भोदु एदं ज्जेव वट्टाइस्सं । [ प्रकाशम् ] भो वअस्स ! तदा सा तुए रुदती किं भणिदा ? ( ङ ) ।

---

( क ) का पुनरेषा भविष्यति ।

( ख ) भर्तृदारिके ! यथा आवाम् अपवारिते तावत् एनं प्रेक्षावहे, मा नाम त्वमपि एवं दृष्टा ।

( ग ) युज्यते एतत्, किं पुन प्रणयकुपितं प्रियजनं हृदये कृत्वा मन्त्रयति ?

( घ ) भर्तृदारिके ! मा ईदृशीं शङ्कां कुरुष्व, पुनरपि तावत् शृणुव ।

( ङ ) अभिरमते एष एतया कथया, भवतु एतामेव वर्तयिष्यामि । भो वयस्य तदा सा त्वया रुदती किं भणिता ?

अभिरमति सन्तुष्यति। एतया कान्ताविषयिरया वर्त्तयिष्यामि सञ्चारयिष्यामि।

नायक। वयस्य! इदमुक्ता—

निष्यन्दत इवानेन मुखचन्द्रोदयेन ते
एतद् वाष्पाम्बुना सिक्तं चन्द्रकान्तशिलातलम्॥ २५॥

'निष्यन्दत इति'

पदच्छेदः—

निष्यन्दते (क्रिया) इव (अव्ययम्) अनेन (३।१ हेतुवि) मुखचन्द्रोदयेन (३।१ हेतुप.) ते (६।१) एतत् (१।१ कर्तृवि.) वाष्पाम्बुना (३।१ निष्ठान्तं कर्तृप.) सिक्तम् (निष्ठान्त कर्तृवि.) चन्द्रकान्तशिलातलम् (१।१ कर्तृ)।

व्याख्या—

स्वप्ने जीमूतवाहनेन प्रिया विमुक्तत्याह 'निष्यन्दत इति' अनेन सम्मुख दृश्यमानेन ते तव मुखचन्द्रोदयेन मुख चन्द्र इव तस्य उदयेन उद्गमनेन वाष्पाम्बुना अश्रुजलेन सिक्तम् आर्द्रीकृतम् एतत् चन्द्रकान्तशिलातलम् निष्यन्दत इव क्षरतीव। चन्द्रोदये चन्द्रकान्तक्षरणप्रसिद्धेरित्याशयः॥ २५॥

उपमानुप्राणित उत्प्रेक्षालङ्कार॥

नायिका। [सरोषम्] चदुरिए! अत्थि किं अदो वि अवरं सोदव्वं, ता एहि, गच्छह्म अण्णदो (क)

चेटी। [हस्ते गृहीत्वा] भट्टिदारिए! एव्वं मा भण, तुमं एव्व सिविणए दिट्ठा, ण एदस्स अण्णस्सिं दिट्ठी अहिरमदि (ख)।

नायिका। ण मे हिअअं पत्तिआअदि, ता कहावसाणं दाव पडिपालेम्ह (ग)।

नायक। वयस्य! जाने तामिवास्यां शिलायामालिख्य तया चित्रगतया आत्मानं विनोदयामीति, तदित एव गिरितटान्मनःशिलाशकलानि आदाय आगच्छ।

विनोदयामि प्रसादयामि। मन शिलाशकलानि मनः शिलाख्यो धातुविशेषस्तस्य शकलानि खण्डान्।

विदूषकः। जं भवं आणवेदि। [परिक्रम्य गृहीत्वापसृत्य] भो वअस्स! तुए एक्को वण्णओ, आणत्तो, मए उण इह एव्व सुलह-

(क) चतुरिके! अस्ति किमतोऽप्यपर श्रोतव्यम्, तदेहि, गच्छावोऽन्यतः।

(ख) भर्तृदारिके! एव मा भण, त्वमेव स्वप्ने दृष्टा, न एतस्य अन्यस्यां दृष्टिरभिरमते।

(ग) न मे हृदयं प्रत्येति, तत् कथावसानं तावत् प्रतिपालयावः।

पञ्चराइणो वण्णआ आणीदेत्ति, आलिहदु भवं (क)। [उपनयति
'सुलभपञ्चरागिणः' सुखेन लब्धुं शक्या. सुलभाः पंच रागा लोहितादयं वर्णा येषु तादृशाः।

नायकः। वयस्य ! साधुकृतम् [ गृहीत्वा ] [ शिलायामालिख्य सरोमाञ्चम् ] सखे ! पश्य—

अक्लिष्टबिम्बशोभाधरस्य नयनोत्सवस्य शशिन इव।
दयितामुखस्य सुखयति रेखापि प्रथमदृष्टेयम् ॥ २६ ॥

'अक्लिष्टेति'

पदच्छेदः—

अक्लिष्टबिम्बशोभाधरस्य ( ६।१ सम्बन्धवि. ) नयनोत्सवस्य ( ६।१ सम्बन्धविशे. ) शशिनः ( ६।१ सम्बन्धोपमानम् ) इव ( अव्ययम् ) दयितामुखस्य ( ६।१ सम्बन्धः ) सुखयति ( क्रिया ) रेखा ( १।१ कर्तृप. ) अपि ( अव्ययम् प्रथमदृष्टा ( १।१ कर्तृवि. ) इयम् ( १।१ कर्तृवि. )।

व्याख्या—

'अक्लिष्टेति' अक्लिष्टबिम्बशोभाधरस्य अक्लिष्टा सुगमा बिम्बस्य तदाख्य फलस्य शोभा कान्तिर्यत्र तादृशोऽधरो यस्मिन् तादृशस्य, पक्षे, धरतीति धर अक्लिष्टा या बिम्बस्य मण्डलस्य 'बिम्बोऽस्त्री मण्डलं त्रि' ष्वित्यमरः। शोभा तस्याधरः तादृशस्य, नयनोत्सवस्य नेत्राह्लादकरस्य। उभयत्र समानम्। एतादृशस्य दयितामुखस्य प्रियावदनस्य शशिन. चन्द्रस्येव इयं प्रथमदृष्टा पूर्वमेवावलोकिता रेखाऽपि सुखयति आनन्दयति ॥ २६ ॥ आर्यावृत्तम्। श्लेषानुप्राणितोपमा।

[ लिखति ]

विदूषकः [ सकौतुकं निर्वर्ण्य ] अपच्चक्खेवि एव्व णाम रूअं लिहीअदि, अहो अच्छरिअं !! ( ख )

सकौतुकं सकुतूहलं निर्वर्ण्य दृष्ट्वा।

नायकः। [ सस्मितम् ] वयस्य !—

प्रिया सन्निहितैवेयं सङ्कल्पस्थापिता पुरः।
दृष्ट्वा दृष्ट्वा लिखाम्येनां यदि तत् कोऽत्र विस्मयः ॥ २७ ॥

'प्रियेति'

पदच्छेदः—

प्रिया ( १।१ कर्तृप. ) सन्निहिता ( १।१ कर्तृवि. ) एव ( अव्ययम् ) इयम्

---

( क ) यद्भवान् आज्ञापयति, भो वयस्य ! त्वया एको वर्णः अज्ञात मया पुनरिहैव सुलभपञ्चरागिणो वर्णा आनीता इति आलिखतु भवान्।

( ख ) अप्रत्यक्षेपि एवं नाम रूपं लिख्यते, अहो आश्चर्यम्।

( १।१ कर्तृवि. ) सङ्कल्पस्थापिता ( १।१ कर्तृवि. ) पुरः ( अव्ययम् ) दृष्ट्वा ( क्त्वान्तम् ) दृष्ट्वा ( " ) लिखामि (क्रिया) एनाम् (२।१ कर्म) यदि (अव्ययम्) तत् ( १।१ ) क ( १।१ विस्मयवि. ) अत्र (अव्ययम्) विस्मयः ( १।१ )

व्याख्या—

'प्रियेति' इयं पुरोऽग्रतः सङ्कल्पस्थापिता मनःकल्पनेन स्थापिता अत एव सन्निहिता समीपस्था एव । प्रिया अस्तीति शेषः तद् यदि एनां सङ्कल्पस्थापितां प्रियां दृष्ट्वा दृष्ट्वा भूयोभूयेऽवलोक्य लिखामि तत् तर्हि अत्र अस्मिन् कार्ये विस्मय आश्चर्यं कः ? न कोऽपीत्यर्थः ॥ २७ ॥

नायिका । [ सास्रम् ] चदुरिए ! जाणिदं क्खु कहावसाणं, ता एहि दाव मित्तावसुं पेक्खम्ह ( क ) ।

चेटी [ सविषादमात्मगतम् ] जीविदणिरवेक्खो विअसे उल्लावो [ प्रकाशम् ] भट्टिदारिए ! णं गदा एव्व तहिं मणोहारिआ, ता कदापि भट्टा मित्तावसू इह एव्व आअच्छदि ( ख ) ।

'जीवितेति' अस्या मलयवत्या उल्लाप आलापः । सम्भाषणमित्यर्थः । जीवितनिरपेक्षः जीवनाकाङ्क्षारहितः । प्रियप्राप्तिं विना जीवितं त्यक्ष्यति इति सम्भाव्यत इत्यर्थः ।

[ ततः प्रविशति मित्रावसुः ]

मित्रावसुः । आज्ञापितोऽस्मि तातेन यथा वत्स मित्रावसो ! जीमूतवाहनोऽस्माभिरिहासन्नभावात् सुपरीक्षितोऽयं, कुतोऽस्मायोग्यो वरः, तदस्मै वत्सा मलयवती प्रतिपाद्यतामिति, अहं तु स्नेहपराधीनतया अन्यदेव किमप्यवस्थान्तरमनुभवामि । अन्यच्च,

तातेन पित्रा विश्वावसुना, इह अस्मिन् स्थाने आसन्नभावात् निकटवर्त्तित्वात् जीमूतवाहनः सुपरीक्षितः सुनिर्णीतः वरत्वेनेत्यर्थः । प्रतिपाद्यताम् समर्प्यताम् । स्नेहपराधीनतया स्नेहवशवदतया अवस्थान्तरम् अन्या अवस्था अवस्थान्तरम् तद्, मा त्यक्ष्यता मलयवत्या भर्तृगृहगमनरूपमित्यर्थः अनुभवामि साक्षात्करोमि ।

यद्विद्याधरराजवंशतिलकः प्राज्ञः सतां सम्मतो
रूपेणाप्रतिमः पराक्रमधनो विद्वान् विनीतो युवा ।
यश्चासूनपि सन्त्यजेत् करुणया सत्त्वार्थमभ्युद्यत-

( क ) चतुरिके ? ज्ञातं खलु कथावसानं, तदेहि तावन्मित्रावसुं प्रेक्षावहे ।

( ख ) जीवितनिरपेक्ष इवास्या उल्लापः । भर्तृदारिके ! ननु गतैव तत्र मनोहारिका, तत् कदापि भर्ता मित्रावसुरिहैवागच्छति ।

स्तेनास्मै ददतः स्वसारमतुलां तुष्टिर्विषादश्च मे ॥ २८ ॥
'यद्विद्येति'

पदच्छेदः—

यत् ( १।१ ) विद्याधरराजवंशतिलकः ( १।१ ) प्राज्ञः ( १।१ ) स ( ६।३ ) सम्मतः ( १।१ ) रूपेण ( ३।१ ) अप्रतिमः ( १।१ ) पराक्रम ( १।१ ) विद्वान् ( १।१ ) विनीतः ( १।१ ) युवा ( १।१ ) यत् ( १।१ ) ( अव्ययम् ) असून् ( २।३ कर्म. ) अपि ( अव्ययम् ) सन्त्यजेत् ( क्रि करुणया ( ३।१ ) सत्वार्थम् ( क्रियावि. ) अभ्युद्यत ( १।१ ) तेन ( ३।१ हे अस्मै ( ४।१ सम्प्रदानम् ) ददतः ( ६।१ शत्रन्तम् ) स्वसारम् ( २।१ शत्र कर्म ) अतुलाम् ( २।१ शत्रन्तकर्मवि. ) तुष्टि. ( १।१ ) विषादः ( १।१ ) ( अव्ययम् ) मे ( ६।१ ) ।

व्याख्या—

जीमूतवाहनस्य वरत्वे गुणदोषान् प्रकटयति 'यद्विद्येति' यद् यस्मात्कारण विद्याधरराजवंशतिलकः विद्याधरराजानां वंशे कुले तिलकः सर्वप्रधानः, प्रा बुद्धिमान्, सतां साधूनां सम्मतः कृतसम्मानः, रूपेण सौन्दर्येण अप्रति अनन्यसदृशः, पराक्रमधनः पराक्रमः शूरत्वमेव धनं यस्य तादृशः । महाबलव इत्यर्थः । विद्वान् विद्यायुक्तः । विनीतो विनयान्वितः । युवा यौवने वर्तमानः । य यस्मात्कारणाच्च अभ्युद्यत उद्युक्तः सन् करुणया दयया सत्त्वार्थं परजीवरक्षार्थं असून् प्राणानपि । सन्त्यजेत् सम्यक् हर्षेणैव त्यजेत् । तेन हेतुना अस्मै उक्तगुण दोषविशिष्टाय अतुलाम् अनुपमां स्वसारं भगिनीं ददतः समर्पयतो मे मम मित्र वसोः तुष्टिः सन्तोषः विषादः शोकश्च वर्तते इति शेषः । पूर्वो यच्छब्दः तु परश्च विषादे हेतुः । इति काव्यलिङ्गम् । यथाकथं सम्पादनाद् यथासंख्यालङ्का शार्दूलविक्रीडितं वृत्तम् ॥ २८ ॥

श्रुतञ्च, यथा—जीमूतवाहनो गौर्याश्रमसम्बद्धे चन्दनलतागृ वर्त्तते इति, तदेतत् चन्दनलतागृहं यावत् प्रविशामि [प्रविशति]

विदूषकः [ससम्भ्रममवलोक्य] भो वअस्स ! पच्छादेहि दमिणा कअलीवत्तेण इमं चित्तगदं कण्णअं, एसो क्खु सिद्धजुवराओ मित्ता वसू इह आगदो कदापि पेक्खिस्सदि ( क )

नायकः । कदलीपत्रेण प्रच्छादयति ।

मित्रा० । [ प्रविश्य ] कुमार ! मित्रावसुः प्रणमति ।

नायकः [ दृष्ट्वा ] मित्रावसो ! स्वागतम् , इत आस्यताम् ।

---

( क ) भो वयस्य ! प्रच्छादय अनेन कदलीपत्रेण इमां चित्रगतां कन्यकाम्, एष खलु सिद्धयुवराजो मित्रावसुरिहागतः कदापि प्रेक्षिष्यते ।

चेटी। भट्टिदारिए! आअदो भट्टा मित्तावसू (क)

नायिका। हञ्जे! पिअं मे (ख)

नायकः। मित्रावसो! अपि कुशलः सिद्धराजो विश्वावसुः?

मित्रा०। कुशली तातसन्देशेनास्मि त्वत्सकाशमागतः।

नायकः। किमाह तत्रभवान्?।

नायिका। सुणिस्सं दाव—किं तादेण कुसलं संदिट्टंति (ग)।

मित्रा०। [ सास्नं ] इदमाह। तात! अस्ति मे मलयवती नाम कन्या जीवितमिवास्य सर्वस्यैव सिद्धराजान्वयस्य, सा मया तुभ्यं प्रतिपाद्यते, प्रतिगृह्यतामिति।

चेटी। [ विहस्य ] भट्टिदारिए! किं ण कुप्पसि दाणी (घ)।

नायिका। [ सस्मितं सलज्जञ्च अधोमुखी स्थिता ] हञ्जे! मा हस, किं विसुमरिदं दे एदस्स अण्णहिअअत्तणं? (ङ)

नायक। [ अपवार्य्य ] वयस्य! सङ्कटे पतिताः स्मः।

विदूषक [ अपवार्य्य ] भो! जाणामि, ण तं वज्जिअ अण्णेहिं चित्तं अहिरमेदि, जधा तधा जं किम्पि भणिअ विसज्जीअदु एसो(च)

नायिका। [सरोषमात्मगतम्] हदास! को वा एदं ण जाणादि (छ)

हताश निराश ?।

नायक। क इह नेच्छेद् भवद्भिः सह श्लाघ्यमीदृशं सम्बन्धम्, किन्तु न शक्यते चित्तमन्यतः प्रवृत्तमन्यत प्रवर्त्तयितुं ततो नाहमेनां प्रतिग्रहीतुमुत्सहे।

अन्यतोऽन्यत्रविषये प्रवृत्तं निरतं चित्तं मनः अन्यतः तद्भिन्नविषये प्रवर्त्तयितुं रमयितुम्। प्रतिग्रहीतुं स्वीकर्तुम्। उत्सहे उत्साहं करोमि।

नायिका। [ मूर्च्छां नाटयति। ]

चेटी। समस्ससदु समस्ससदु भट्टिदारिआ (ज)।

---

(क) भर्तृदारिके! आगतो भर्त्ता मित्रावसुः।

(ख) हञ्जे! प्रियं मे।

(ग) श्रोष्यामि तावत्। किं तातेन कुशलं सन्दिष्टमिति।

(घ) भर्तृदारिके! किं न कुप्यसीदानीम्?

(ङ) हञ्जे! मा हस। किं विस्मृतं ते एतस्यान्यहृदयत्वम्?

(च) भो! जानामि, न तां वर्जयित्वा ते अन्यत्र चित्तमभिरमते, यथा यत् किमपि भणित्वा विसर्ज्यतामेषः।

(छ) हताश! को वा एतन्न जानाति।

(ज) समाश्वसितु समाश्वसितु भर्तृदारिका।

विदूषकः। भो! पराधीणो क्खु एसो, किं एदिणा अब्भत्थिदेण, ता गुरुअणं से गदुअ अब्भट्ठेहि (क)।

मित्रा०। [आत्मगतम्] साधूक्तम्, नायं गुरुजनमतिक्रामति एष गुरुरप्यस्मिन्नेव गौर्य्याश्रमे प्रतिवसति, तद्यावद्गत्वा अस्य पित्रा मलयवतीं ग्राहयामि।

गौर्य्याश्रमसम्बद्धे गौर्य्याश्रमसमीपस्थे।

ग्राहयामि स्वीकारयामि।

नायिका। [समाश्वसिति।]

मित्रा०। एवं निवेदितात्मनोऽस्मान् प्रत्याचक्षाणः कुमार एव बहुतरं जानाति।

'एवमिति' निवेदितः समर्पित आत्मा यैस्तादृशान् अस्मान् प्रत्याचक्षाण परिहरन् अस्मद्वचनं खण्डयन्नित्यर्थः।

नायिका। [सरोषं विहस्य] कहं पच्चक्खाणलहू मित्तावसू पुणोवि मन्तेदि। (ख)

प्रत्याख्यानलघुः प्रत्याख्यानेन परिहारेण एतज्जाततिरस्कारेणेत्यर्थः। लघु अपगतमानः।

मित्रावसुर्निष्क्रान्तः।

नायिका। [आत्मगतम् साखमात्मानं पश्यन्ती] किं मम एदिणा दोहग्गकलङ्कमइलेण अच्चन्तदुक्खभाइणा अज्जवि सरीरेण धारिदेण, ता इह ज्जेव्व असो अपावे इमाए अदिमुत्तलदाए उब्बन्धिअ अत्ताणं वावादइस्सं, ता एदं एव्वं दाव। [प्रकाशं विलक्षस्मितेन] हञ्जे! पेक्ख दाव मित्तावसू गदो ण वेत्ति जेण अहम्पि इदो गमिस्सं (ग)

दौर्भाग्यकलङ्कमलिनेन दौर्भाग्यं दुर्भगत्वम् एव कलङ्कः लाञ्छनं तेन मलिनेन, इत्यनेनात्मनोऽत्यन्तलघुता दर्शिता तेन जीवनमपि निष्फलमेवेति।

चेटी। [कतिचित् पदानि गत्वा अवलोक्य आत्मगतम्] अण्णारिसं से हिअअं पेक्खामि, ता ण गमिस्सं। इह ज्जेव्व ओवा-

---

(क) भो! पराधीनः खलु एषः, किमनेनाभ्यर्थितेन। यद्गुरुजनमस्य गत्वा अभ्यर्थय।

(ख) कथं प्रत्याख्यानलघुः मित्रावसुः पुनरपि मन्त्रयति।

(ग) किं मम एतेन दौर्भाग्यकलङ्कमलिनेन अत्यन्तदुःखभागिना अद्यापि शरीरेण धारितेन, तदिहैव अशोकपादपे अनया अतिमुक्तलतया उद्बध्य आत्मानं व्यापादयिष्यामि, तदिदमेवन्तावत्, हञ्जे। प्रेक्षस्व तावत् मित्रावसुर्गतो नवेति न अहमपि इतो गमिष्यामि।

रिदा पेक्खामि कं एसा पड़िवज्जदित्ति। (क)

नायिका। [दिशोऽवलोक्य पाशं गृहीत्वा सास्रम्] भगवति-गोरिए! तुए इह ण किदो ता जम्मन्तरे जधा ण ईदिसी दुक्खभाइणी होमि तधा करेसि (ख) [इत्यभिधाय कण्ठे पाशमर्पयति]।

जीवनं त्यक्तुमभिलषन्ती दत्तप्रसादां गौरीम् उपालभते 'भगवतीति' इहास्मिन् जन्मनि तु प्रसादो न कृतः ततस्माद् जन्मान्तरेऽन्यास्मिन् जन्मनि।

चेटी। [दृष्ट्वा ससम्भ्रममुपसृत्य] परित्ताअदु परित्ताअदु अज्जो, एसा भट्टिदारिआ उब्बन्धिअ अत्ताणअं बावादेदि। (ग)

नायकः। [ससम्भ्रममुपसृत्य] क्वासौ? क्वासौ?

चेटी। इअं असोअपादवे। (घ)

नायकः। [सहर्षमवलोक्य] सैवेयमस्मन्मनोरथभूमिः।
[नायिकां पाणौ गृहीत्वा लतापाशमाक्षिपति]।

अस्मन्मनोरथभूमिः, अस्माकं मनोरथाना वाञ्छाना 'तृड्वाञ्छा लिप्सामनोरथ' इत्यमर। भूमिः आधार इत्यर्थः।

न खलु न खलु मुग्धे! साहसं कार्य्यमीदृक्
व्यपनय करमेतं पल्लवाभं लतायाः।
कुसुममपि विचेतुं यो न मन्ये समर्थः,
कलयति स कथं ते पाशमुद्बन्धनाय ॥ २६ ॥

'नखल्विति'

पदच्छेद —

न (अव्ययम्) खलु, न, खलु (अव्ययत्रयम्) मुग्धे (सम्बोधनम्) साहसम् (१।१ ण्यप्रत्ययान्तकर्म) कार्यम् (ण्यप्रत्ययान्तक्रिया) ईदृक् (१।१ ण्यान्तकर्मविशेषणम्) व्यपनय (क्रिया) करम् (२।१ कर्म) एतम् (२।१ कर्मवि.) पल्लवाभम् (२।१ कर्मवि.) लतायाः (५।१) कुसुमम् (२।१ तुमुन्नन्तकर्म) अपि (अव्ययम्) विचेतुम् (तुमुन्नन्तम्) यः (१।१ कर्तृवि.) न (अव्ययम्) मन्ये (क्रिया) समर्थः (१।१ कर्तृवि.) कलयति (क्रिया) सः

---

(क) अन्यादृशमस्या हृदयं प्रेक्षे, तन्न गमिष्यामि इहैवापवारिता प्रेक्षे किमेषा प्रतिपद्यत इति।

(ख) भगवति! गौरि! त्वया इह न कृतः, तद् जन्मान्तरे यथा न ईदृशी दुःखभागिनी भवामि तथा करिष्यसि।

(ग) परित्रायतां परित्रायतामार्य्यः, एषा भर्तृदारिका उद्बध्य आत्मानं व्यापादयति।

(घ) इयमशोकपादपे।

( १।१ कर्तृवि ) कथम् ( अव्ययम् ) ते ( ६।१ ) पाशम् ( २।१ कर्म ) उद्बन्धनाय ( ४।१ ) ।

व्याख्या—

नायिकायाः प्रसादाय कोमलालापं कुर्वन्नाह 'नेति' हे मुग्धे ? 'प्रथमावतीर्णयौवनमदनविकारा रतौ वामा । दयिता मृदुश्च माने समधिकलज्जावती मुग्धा' इतिलक्षणालक्षिते ? तथा मुग्धे ? एतादृशसाहसकरणाद् मूढे ? 'मुग्धस्तु सुन्दरे मूढे' इति मेदिनी । ईदृक् साहसं बलात्कारकृतकार्यम् हठ इत्यर्थः 'साहसं तु बलात्कारकृतकार्ये दमेऽपि' चेति मेदिनी न खलु न खलु । वीप्सायोतकं द्विर्वचनम् । कार्यं कर्तव्यम् । पल्लवाभं पल्लवस्य आभेवाभा यस्य तादृशं पल्लवसदृशकोमलम् एतं कर हस्तं लतायाः वीरुत्सकाशात् व्यपनय दूरीकुरु । व्युपूर्वाण्णीधातोर्लोट् । य करः अहं मन्ये कुसुमं पुष्पमपि विचेतुम् एकत्रीकर्तुं न समर्थः शक्तः स उद्बन्धनाय उद्ग्रहणाय पाशं बन्धनं कथं केन प्रकारेण कलयति गृह्णाति यद्यपि कलधातुः संख्यानार्थे वर्तते तथाऽपि धातूनामनेकार्थत्वादत्र ग्रहणार्थकोऽयम् मालिनी वृत्तम् । 'ननमयययुतेयं मालिनी भोगिलोकै' रिति लक्षणात् । उपमालङ्कारः ॥ कुसुमावचयनस्य सम्भावनादुत्प्रेक्षाऽपि ॥२९॥

**नायिका । [ ससाध्वसम् ] हञ्जे ! को उण एसो ? [ निरूप्य सरोषं हस्तमाक्षेप्तुमिच्छति ] मुञ्च मुञ्च अग्गहत्थम्, को तुमं णिवारेदुं । मरणेवि किं तुमं ज्जेव्व अब्भत्थणीओ ( क )**

मरणे मृत्युकालेऽपि अभ्यर्थनीयः प्रार्थनीयः ।

**नायकः ।**

**कण्ठे हारलतायोग्ये येन पाशस्त्वयार्पितः ।**
**गृहीतः सापराधोऽयं कथं ते मुच्यते करः ॥ ३० ॥**

'कण्ठ इति'

पदच्छेदः—

कण्ठे ( ७।१ अधिकरणम् ) हारलतायोग्ये ( ७।१ अधिकरणवि. ) येन ( ३।१ करणम् ) पाशः ( १।१ क्रान्तकर्म ) त्वया ( ३।१ क्रान्तकर्तृप. ) अर्पित ( १।१ क्रान्तम् ) गृहीत ( १।१ क्रान्तम् ) सापराध ( १।१ क्रान्तकर्मवि. ) अयं ( १।१ क्रान्तकर्म ) कथम् ( अव्ययम् ) ते ( ६।१ ) मुच्यते ( कर्मक्रिया ) करः ( १।१ कर्मक्रियाकर्म ) ।

व्याख्या—

करामोचने हेतुमाह 'कण्ठ इति' त्वया मुग्धया येन करेण हारलतायोग्ये-

---

( क ) हञ्जे ! कः पुनरेष ? मुञ्च मुञ्चाग्रहस्तम्, कस्त्वं निवारयितुम् ! मरणेऽपि किं त्वमेवाभ्यर्थनीयः ।

हारो मुक्तावलिरेव लता 'हारो मुक्तावली युधोति मेदिनी' तयोग्ये तदुचिते कण्ठे गले पाशो बन्धः अर्पितो दत्तः 'ऋगतौ' इति धातोर्ण्यन्तात्कर्मणि क्तः 'अर्तिह्री' त्यादिना पुक् तादृशः सापराधः सदोषोऽय ते करो हस्तो गृहीत उपादत्त सन् कथं मुच्यते त्यज्यते दण्डप्राप्तिं विना ऽपराधी न मोच्यते इत्याशयः। अत्र करविमोचने सापराधत्वं हेतुरतः काव्यलिङ्गालंकारः 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते' इति लक्षणात् ॥ ३० ॥

विदूषकः। भोदु, किं उण से इमस्स मरणव्ववसाअस्स कारणं? (क)।

मरणव्यवसायस्य मरणोत्साहस्य।

चेटी। णं एसो एव्व ते पिअवअस्सो (ख)।

नायकः। कथमहमेवास्या मरणकारणम्, न खल्ववगच्छामि।

विदूषकः। भोदि! कहं विअ? (ग)

चेटी [साकूतम्] जा सा पियवअस्सेण दे कावि हिअअवल्लहा सिलाअले आलिहिआ, ताए पक्खवादिणा एदेण पडिवादअन्तस्सवि मित्तावसुणो णाहं पडिच्छिदेत्ति जादणिव्वेदाए इमाए एव्वं व्ववसिदं। (घ)

साकूत साभिप्रायम्।

तस्या हृदयवल्लभायाः पक्षपातिना पक्षरक्षिणा एतेन नायकेन प्रतिपादयतः समर्थ यतोऽपि मित्रावसोः अहं न प्रतीष्टा प्रत्यभिलषिता इत्येवं जातनिर्वेदया उत्पन्नवैराग्यया एवं व्यवसितमुद्युक्तम्।

नायक। [सहर्षमात्मगतम्] कथमियमेवासौ विश्वावसोर्दुहिता मलयवती, अथवा रत्नाकरादृते कुतश्चन्द्रलेखायाः प्रसूतिः, हा! कथं वञ्चितोस्मि अनया।

रत्नाकराद् ऋते जलनिधिं विना 'रत्नाकरो जलनिधि' रित्यमरः। चन्द्रलेखाया। चन्द्रलेखायाः प्रसूतिः समुत्पत्तिः कुतः। अत्र प्रस्तुते विश्वावसोः कुलेऽप्रस्तुतस्य रत्नाकरस्यारोपाद् मलयवत्या च चन्द्रलेखाया आरोपात्समासोक्तिः।

विदूषकः भोदि! जदि एव्वं ता अणवरद्धो दाणीं पिअवअस्सो।

(क) भवतु, किं पुनरस्या अस्य मरणव्यवसायस्य कारणम्?

(ख) नन्वेष एव ते प्रियवयस्यः।

(ग) भवति! कथमिव?

(घ) या सा प्रियवयस्येन ते कापि हृदयवल्लभा शिलातले आलिखिता, तस्याः पक्षपातिना एतेन प्रतिपादयतोऽपि मित्रावसोर्नाहं प्रतीष्टेति जातनिर्वेदया अनया एवं व्यवसितम्।

अहवा जइमम ण पत्तिआअसि । तदा सअं ज्जेव्व सिलाअलं गदुअ पेक्खदु भोदी । ( क )

नायिका । सहर्षं सलज्जम नायकं पश्यन्ती हस्तमाकर्षति ।

नायकः । [ सस्मितम् ] न तावन्मुञ्चामि यावन्मम हृदयवल्लभां शिलायामालेख्यगतां न पश्यसि ।

सर्वे परिक्रामन्ति ।

विदूषकः । [ कदलीपत्रमपनीय ] भोदि ! पेक्ख पेक्ख एदं से हिअअवल्लहं जणं । ( ख )

नायिका । निरूप्य अपवार्य्य सस्मितम् ] चदुरिए ! अहं विअ आलिहिदा । ( ग )

चेटी । [ चित्राकृतिं निर्वर्ण्य ] भट्टिदारिए ! किं भणासि ? अहं विअ आलिहिदेत्ति । इदिसं सोसारिच्छं । जेण ण जाणीअदि किं दाव इह ज्जेव्व सिलाअले भट्टिदारिआए पडिबिम्बं संकन्तं उद तुमं आलिहिदेत्ति । ( घ )

भर्तृदारिकया राजसुतायाः प्रतिबिम्बं सङ्क्रान्तं प्रतिबिम्बितम् उत त्वं भर्तृदारिका एव आलिखितेति सन्देहालङ्कारः । ' सन्देहः प्रकृतेऽन्यस्य संशय प्रतिभोत्थितः ' इति साहित्योक्तेः ।

नायिका । [ विहस्य ] हञ्जे ! दुज्जणीकिदम्हि इमिणा मं चित्तगदं दंसअन्तेण । ( ङ )

दुर्जनीकृताऽस्मि चित्रगता मा सर्वे द्रक्ष्यन्तीति सदोषीकृताऽस्मि ।

विदूषकः । णिव्वुत्तो दाणीं दे गन्धव्वो विवाहो । ता मुञ्च दाव से अग्गहत्थं । एसा क्खु कावि तुरिदतुरिदा इह एव्व आअच्छदि ( च ) ।

---

( क ) भवति ! यद्येवं तदनपराद्ध इदानीं प्रियवयस्य', अथवा यदि मम न प्रत्येति, तदा स्वयमेव शिलातलं गत्वा प्रेक्षतां भवती ।

( ख ) भवति ! प्रेक्षस्व एनमस्य हृदयवल्लभं जनम् ।

( ग ) चतुरिके ! अहमिवालिखिता ।

( घ ) भर्तृदारिके ! किं भणसि ? अहमिवालिखितेति । ईदृशं सोसादृश्यम् । येन न ज्ञायते किं तावदिहैव शिलातले भर्तृदारिकाया प्रतिबिम्बं संक्रान्तमुत त्वमालिखितेति ।

( ङ ) दुर्जनीकृतास्मि अनेन मा चित्रगतां दर्शयता ।

( च ) निर्वृत्त इदानीं ते गान्धर्वो विवाहः । तन्मुञ्च तावदस्या अग्रहस्तम् । एषा खलु कापि त्वरितत्वरिता इहैवागच्छति ।

मिथोऽनुरागजनितो गन्धर्वविवाहः। तदुक्तं मनुना 'इच्छयाऽन्योऽन्यसंयोग कन्यायाश्च वरस्य च। गान्धर्वः सतु विज्ञेयो मैथुन्यः कामसम्भवः' इति।

नायक मुखाति।

[ तत प्रविशति चेटी ]

चेटी। [ सहर्षम् ] भट्टिदारिए! दिट्टिआ वड्ढसि। पड़िच्छिदा क्खु तुम भट्टिणो जीमूतवाहणस्स गुरूहिं ( क )।

विदूषक। ( नृत्यन् ) ही ही--भो सम्पुण्णा मणोरहा पिअवअस्सस्स। अहवा णहि णहि। ( भोदीए मलअवदीए ) अवधा ण एदाणं। भोजनमभिनयन्। मम ज्जेव एक्कस्स बह्मणस्स ( ख )।

चेटी। ( नायिकामुद्दिश्य ) आणत्तम्हि जुअराजमित्तावसुणा जह अज्ज ज्जेव्व मलअवदीए विवाहो ता लहुं तं गेण्हिअ आअच्छत्ति ता एहि गच्छम्ह ( ग )।

विदूषक। गदा क्खु तुमं दासीए धीए एदं गेण्हिअ। वअस्सेण किं इध एव्व अवत्थिदव्वं? ( घ )।

चेटी। हदास! मा तुवर तुवर। तुह्माणंपि ह्नपणकं आगदं एव्व ( ङ )।

स्नपनकं स्नानादौ अभ्यङ्गार्थो द्रव्यविशेषः। हताश! निराश!

नायिका। सानुरागं सलज्जञ्च नायकं पश्यन्ती सपरिवारा निष्क्रान्ता।

नेपथ्ये वैतालिकः पठति।

वृष्ट्या पिष्टातकस्य द्युतिमिह मलये मेरुतुल्यां दधानः
सद्यः सिन्दूरधूलीकृतदिवससमारम्भसन्ध्यातपश्रीः।
उद्गीतैरङ्गनानामरुणमणिरणन्नूपुरारावहृद्यै-
रुद्वाहस्नानवेलां कथयति भवतः सिद्धये सिद्धलोकः॥ ३१॥

विदूषकः [आकर्ण्य!] भो वअस्स दिट्टिआ आगदं ण्हपणअं(च)।

---

(क) भर्तृदारिके! दिष्ट्या वर्धसे प्रतीष्टा खलु त्वं भर्तुर्जीमूतवाहनस्य गुरुभि.।

(ख) ही ही—भो! सम्पूर्णा मनोरथाः प्रियवयस्यस्य। अथवा नहि नहि भवत्या मलयवत्या। अथवा न एतयो। ममैव एकस्य ब्राह्मणस्य।

(ग) आज्ञप्तास्मि युवराजमित्रावसुना यथा अद्यैव मलयवत्या विवाहः तल्लघुं ता गृहीत्वा आगच्छेति। तदेहि गच्छावः।

(घ) गता खलु त्वं दास्याः पुत्रि इमा गृहीत्वा। वयस्येन किमिहैव अवस्थातव्यम्?

(ङ) हताश! मा त्वरस्व त्वरस्व। युष्माकमपि स्नपनकमागतमेव।

(च) भो वयस्य! दिष्ट्या आगतं स्नपनकम्।

नायकः । ( सहर्षम् ) यद्येवं किमिदानीमिह स्थितेन । आगच्छ तातं नमस्कृत्य स्नानभूमिमेव गच्छावः ।

इति निष्क्रान्ताः सर्वे ।

इति द्वितीयोऽङ्कः ।

---

' वृष्ट्येति '

पदच्छेदः—

वृष्ट्या ( ३।१ हेतुः ) पिष्टातकस्य ( ६।१ ) द्युतिम् ( २।१ शानजन्तकर्म इह ( अव्ययम् ) मलये ( ७।१ ) मेरुतुल्याम् ( २।१ शानजन्तकर्मवि. ) दधान ( १।१ शानजन्तं कर्तृवि. ) सद्यः ( अव्ययम् ) सिन्दूरधूलीकृतदिवससमारम्भ सन्ध्यातपश्रीः ( १।१ कर्तृवि. ) उद्गीतैः ( ३।३ करणम् ) अंगनानाम् ( ६।३ अरुणमणिरणन्नूपुरारावहृद्यैः ( ३।३ करणवि. ) उद्वाहस्नानवेलाम् ( २।१ कर्म कथयति (क्रिया) भवत. (६।१) सिद्धये (४।१) सिद्धलोकः (१।१ कर्तृपदम् ) ।

व्याख्या—

वैतालिकः विविधेन तालेन शब्देन चरतीति विग्रह । स्तुतिपाठक इति पर्यायवाची पठति वृष्ट्येति इहास्मिन् मलये तदाख्यपर्वते पिष्टातकस्य पिष्टात एव पिष्टातक· पटवासकापरपर्यायः सुगन्धिचूर्णविशेष ' पिष्टात पटवासक ' इत्यमर. तस्य वृष्ट्या वर्षणेन हेतुना मेरुतुल्या सुमेरुसदृशीं द्युतिं शोभा ' शोभा कान्तिर्द्युतिश्छविरि ' त्यमर । दधान. धारयन् इति निदर्शना सद्य इदानीमेव सिन्दूरस्य रक्तचूर्णकस्य ' सिन्दूरं रक्तचूर्णके ' इति मेदिनी । धूल्या कृता विहिता दिनस्य दिनस्य समारम्भे प्रारम्भेऽपि प्रातःकालेऽपीत्यर्थः । सन्ध्यातपस्य सन्ध्याकालीन सूर्यकिरणस्य रक्तवर्णात्मत् श्रीः शोभा येन तादृश सिद्धलोक सिद्धजन· भवतो जीमूतवाहनस्य सिद्धयेऽभीष्टसिद्ध्यर्थम् । अरुणेति । अरुणा रक्तवर्णा मणयो येषु तादृशा रणन्तो झणत्कारं कुर्वन्तो ये नूपुरा मञ्जीरा पादालङ्कारविशेषा ' मञ्जीरो नूपुरोऽस्त्रिया ' मित्यमरः । तेषाम् आरावेण ध्वनिना हृद्यैः मनोहरै. अङ्गनाना कान्तानाम् उद्गीतै. उच्चस्वरगीतै उद्वाहस्नानवेला विवाहस्नानसमय कथयति सूचयति । स्रग्धरावृत्तम् । अत्र मलयस्य मेरुणा दिवसारम्भस्य सन्ध्याकालेन च बिम्बानुबिम्बत्वप्रदर्शनान्निदर्शनालंकार. । ' सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित् । यत्र बिम्बानुबिम्बत्वं बोधयेत्सा निदर्शना ' इति दर्पणोक्ते ॥ ३१ ॥

इति नागानन्दे सरस्वतीदधिमथीनामधेयाया टीकाया द्वितीयोऽङ्क. ।

## अथ तृतीयोऽङ्कः।

ततः प्रविशति मत्तो विचित्रविह्वलवेशश्चषकहस्तो विटः स्कन्धारोपितसुराभाण्डश्चेटश्च।

मत्तो मदयुक्तो मद्यपानेनेत्यर्थः। विचित्रोऽनेकविधो विह्वलो विक्लव इतस्ततः परिक्षिप्त इति यावत्। 'विक्लवो विह्वलः स्यादि' त्यमरः। वेशो वस्त्रादिधारणं यस्य तादृशः चषकहस्तः चषकः पानपात्रं हस्ते यस्य तादृशो विटः। 'चषकोऽस्त्री पानपात्र' मित्यमरः। स्कन्धेति। स्कन्धे भुजशिरसि 'स्कन्धोभुजशिरोंऽसोऽस्त्री' त्यमरः। आरोपितं स्थापितं सुराभाण्डं मद्यपात्रं येन तादृशश्चेटश्च प्रविशति। तत्र विटचेटौ शृङ्गारसहायौ, तदुक्तं दर्पणे 'शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः स्युः। भक्ता नर्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः' इति। विटलक्षणं यथा तत्रैव 'सम्भोगहीनसम्पद् विटस्तु धूर्तः कलैकदेशज्ञः। वेशोपचारकुशलो वाग्मी मधुरोऽथ बहुमतो गोष्ठ्याम्' इति।

विटः।

णिच्चं जो पिवइ सुरं जणस्स पिअसङ्गमञ्च जो कुणइ।

अह ते दो अवि देवा बलदेवो काम देवो च ॥ ३२ ॥ (क)

नित्यमिति। यो नित्यं सुरा पिबति यश्च जनस्य प्रियसङ्गमं प्रिययोः कान्ताकान्तयोः सङ्गमं मिलापं करोति, तौ मद्यपो बलदेवः प्रियसङ्गमकारी कामदेवश्चेति द्वावेव देवौ, विटस्य सुरापानं प्रियासङ्गमश्चेति कार्यद्वयमेवेष्टमतस्तन्मते तत्कार्यद्वयकर्तारौ बलदेवकामदेवौ द्वावेव देवपदवाच्यौ तदितरे तु सामान्या एवेत्यर्थः।

(घूर्णन्) सफलं क्खु मे सेहरअस्स जीविअं।

वच्छत्थलम्हि दइआ णीलुप्पलवासिआ मुहे मइरा।

सीसम्मि अ सेहरओ णिच्चं विअ चेडिआ जस्स ॥ ३३ ॥ (ख)

स्वजीवितस्य सफलत्वे हेतुमेवाह वक्षःस्थल इति। यस्य वक्षःस्थले उरसि नित्यमिव सदैव दयिता प्रिया चेटिका चेटी तिष्ठतीति शेषः। यस्य च मुखे अनेन नीलोत्पलवासिता नीलोत्पलं नीलकमलं तेन वासिता प्राप्तसुगन्धिः मदिरा सुरा वर्तते स शेखरकः तदाख्यो विटः शीर्षे शिरसि वर्तते सर्वप्रधान इत्यर्थः। बलदेवकामदेवयोस्त्वेक एव गुणः 'अस्मिन् गुणद्वयमेव वर्तत इति सर्वाधिकत्वाद् व्यतिरेकः प्रदर्शितः।

---

(क) नित्यं यः पिबति सुरां जनस्य प्रियसङ्गमं च यः करोति।
अथ तौ द्वावपि देवौ बलदेवः कामदेवश्च ॥ ३२ ॥

(ख) सफलं खलु मे शेखरकस्य जीवितम्।
वक्षःस्थले दयिता नीलोत्पलवासिता मुखे मदिरा।
शीर्षे च शेखरको नित्यमिव चेटिका यस्य ॥ ३३ ॥

[ प्रस्खलन् ] अरे ! को मं चालेदि ? । [ सहर्षम् ] अवस्सं णोमालिआ मं परिहसदि (क)।

चेटः । भट्टक ! ण अ दाव सा अज्जवि इहागच्छदि (ख)।

विटः । [ सरोषम् ] पढमपहरे ज्जेव्व मलअवदीए विवाहमङ्गलं णिव्वुत्तं । ता कीस सा दाणीं पभादेवि णागच्छदि ।

[ विचिन्त्य सहर्षम् ] अहवा विवाहमहोस्सवे सव्वो एव्व पिअपणइणीजणसणाहो सिद्धविज्जाहरलोओ कुसुमाअरुज्जाणे आपाणअसोक्खमणु भविस्सदित्ति तक्केमि तहिं ज्जेव्व णोमालिआ मं अवेक्खमाणा चिट्ठदि । ता तहिं जेव्व गमिस्सं । कीदिसो णोमालिआ एविणा सेहरओ (ग)।

प्रियेति । प्रियो यः प्रणयिनीजन. कान्तसमूहस्तेन सनाथो युक्त, आपानसौख्यम् आसमन्तात्सुरापानोत्पन्नसुखत्वम् । नवमालिका नाम चेटी ।

[ प्रस्खलन्निष्कामति ]

चेटः । एदु एदु भट्टके ! एदं कुसुमाअरुज्जाणं । ता पविसदु भट्टके ! (घ)। [ उभौ प्रवेशं नाटयत. ]।

[ ततः प्रविशति स्कन्धन्यस्तवस्त्रयुगलो विदूषक ]

विदूषकः । सम्पुण्णा मणोरहा पिअवअस्सस्स । सुदं क्खु मए वि पिअवअस्सो कुसुमाअरुज्जाणं गमिस्सदित्ति । ता जाव तहिं एव्व गमिस्सं । [ परिक्रम्यावलोक्य च ] इदं कुसुमाअरुज्जाणं । जाव पविशामि णं । [ प्रविश्य भ्रमरबाधां नाटयन् ] अरे ! कीस उण पुट्ठमहुअरा मं एव्व अभिभवन्ति । [आत्मानमाघ्राय] भोदु जाणिदं । जं तं मलअवदीवन्धुजणेण जामातुअस्स वअस्सोत्ति कदुअ सवहुमाणं वण्णकेहिं विचित्तिदोह्मि । सन्ताणकुसुमसेहरअं च मम सीसे पिणद्धं । सोक्खु एसो अच्चाअरो अणत्थीभूदो । किं दाणिं एत्थं करइस्सं । अधवा एदेण ज्जेव्व मलअवदीसआसादो

(क) अरे ! को मा चालयति ? अवश्य नवमालिका मा परिहसति ।

(ख) भर्त्त ! न च तावत् सा अद्यापि इहागच्छति ।

(ग) प्रथमप्रहरे एव मलयवत्या विवाहमङ्गलं निर्वृत्तम् । तत् कथं सा इदानीं प्रभातेऽपि नागच्छति । अथवा विवाहमहोत्सवे सर्व एव प्रियप्रणयिनीजनसनाथः सिद्धविद्याधरलोकः कुसुमाकरोद्याने आपानसौख्यमनुभविष्यतीति तर्कयामि । तत्रैव नवमालिका माम् अवेक्षमाणा तिष्ठति । तत्रैव गमिष्यामि । कीदृशो नवमालिकया विना शेखरकः ।

(घ) एतु एतु भर्त्ता । इद कुसुमाकरोद्यानम् । तत् प्रविशतु भर्त्ता ।

लद्धेण रत्तं सुअजुअलेण इत्थिअवेसं विहिअ उत्तरीअकिदाव-गुण्ठणो गमिस्सं। पेच्छामि दाव किं दासीए पुत्ता महुअरा कर-इस्सन्ति ? (क)। [तथा करोति]।

सन्तानकुसुमशेखरकं सन्तानो देववृक्षस्तस्य कुसुमानां पुष्पाणां 'कुसुमं स्त्री-रजोनेत्ररोगयोः फलपुष्पयो' रिति मेदिनी। शेखरकं शेखर एव शेखरकस्तं शिखान्यस्तमाल्यमित्यर्थः। पिनद्धं बद्धम् 'अपिपूर्वाद् णहधातोः क्तः' भागुरिमते-नापेरकारलोपः।

विटः। [निरूप्य सहर्षम्] अरे चेड़ा ! [अङ्गुल्या निर्दिश्य सहासम्] एसा क्खु णोमालिआ आअदा। मं पेक्खिअ चिरस्स आअदोत्ति कुविदा अवगुण्ठणं कदुअ अण्णदो गच्छदि। ता कण्ठे गेह्णिअ पसादेमि णं (ख)। [सहसोपसृत्य कण्ठे गृहीत्वा मुखे ताम्बूलं दातुमिच्छति]।

विदूषकः [मदगन्धं सूचयन् नासिकां गृहीत्वा पराङ्मुखः स्थित्वा] कहं एकाणं महुअराणं सआसादो परिब्भट्ठो दाणिं अण्णस्स दुट्ठमहुअरस्स मुहे पाड़िदोह्मि (ग)।

विटः। कहं कोवेण परम्मुही भूदा ? [प्रणामं कुर्वन् विदूषकस्य चरणमात्मनः शिरसि कृत्वा] पसीद णोमालिए ! पसीद (घ)।

[ततः प्रविशति चेटी]

चेटी। आणत्तह्मि भट्टिदारिआए। हञ्जे णोमालिए ! कुसुमाअ-

---

(क) सम्पूर्णो मनोरथः प्रियवयस्यस्य। श्रुतं खलु मयापि प्रियवयस्यस्य कुसुमाकरोद्यानं गमिष्यतीति। तद्यावत्तत्रैव गमिष्यामि। इदं कुसुमोद्यानम् यावत् प्रविशाम्येतत्। अरे ! कथं पुनर्दुष्टमधुकरा मामेव अभिभवन्ति भवतु ज्ञातम्। यत्तन्मलयवतीबन्धुजनेन जामातुर्वयस्य इति कृत्वा सबहुमानं वर्णकैर्विचित्रितो-ऽस्मि। सन्तानकुसुमशेखरकं च मम शीर्षे पिनद्धम्। स खलु एषः अत्यादरः अनर्थीभूतः। किमिदानीमत्र करिष्यामि। अथवा एतेनैव मलयवतीसकाशाल्लब्धेन रक्तांशुकयुगलेन स्त्रीवेशं विधाय उत्तरीयकृतावगुण्ठनो गमिष्यामि। प्रेक्षे तावत् किं दास्याः पुत्रा मधुकराः करिष्यन्ति ?

(ख) अरे चेट ! एषा खलु नवमालिका आगता। मां प्रेक्ष्य कथं चिर-स्यागत इति कुपिता अवगुण्ठनं कृत्वान्यतो गच्छति। तत् कण्ठे गृहीत्वा प्रसादयाम्येनाम्।

(ग) कथमेतेषां मधुकराणां सकाशात् परिभ्रष्ट इदानीमन्यस्य दुष्टमधुकरस्य मुखे पतितोऽस्मि।

(घ) कथं कोपेन पराङ्मुखीभूता ? प्रसीद नवमालिके ! प्रसीद।

रुज्जाणं गदुअ उज्जाणपालिअं पल्लविअं भणाहि। अज्ज! सविसेसं तमालवीहिअं सज्जीकरेहि। मलअवदीसहिदेण जामाउकेण तत्थ गन्तव्वंति। आणत्ता मए पल्लविआ। ता जाव रअणीविरहवड्ढिदुक्कण्ठं पिअवअस्सअं सेहरअं अण्णेसामि। [दृष्ट्वा] एसो सेहरओ। [सरोषम्] कहं अण्णं कम्पि इत्थिअं पसादेदि। ता इहं ट्ठिदा एव्व जाणामि का एसेत्ति (क)।

रजनीति। रजन्यां निशायां यो विरहो मद्वियोगस्तेन वर्धिता उत्कण्ठा यस्य तादृशम्।

विटः। [सहर्षम्।]

हरिहरपिदामहाणं पिगव्विदो जो ण जाणइ णमिदुं।
सो सेहरओ चलणेसु तुज्झ णोमालिए! पड़इ॥ ३४॥ (ख)

नवमालिकाया भ्रान्त्या प्रसादनाय विदूषकस्य चरणयो पतन्नाह—हरिहरेति। हे नवमालिके। यो गर्वितो मत्तः सन् हरिहरपितामहानां विष्णुशिवब्रह्माणमपि नन्तुं नमस्कर्तुं न जानाति स शेखरकस्तव चरणयो. पतति।

विदूषक.। दासीए पुत्ता! मत्तवालआ! कुदो एत्थ णोमालिआ (ग)।

चेटी। [निरूप्य सस्मितम्] कहं मं ति करिअ मदपरव्वसेण सेहरएण अज्जअत्तेओ पसादीअदि। ता जाव अलीअकोवं करिअ दुवेवि एदे परिहसिस्सं (घ)।

चेटः। [चेटीं दृष्ट्वा शेखरकं हस्तेन चालयन्] भट्टका! मुञ्च एदं ण भोदि एसा णोमालिआ, एसा उण रोसारत्तेहिं लोअणेहिं पेक्खन्ती आअदा (ङ)।

---

(क) आज्ञप्तास्मि भर्तृदारिकया। हञ्जे नवमालिके! कुसुमाकरोद्यानं गत्वा उद्यानपालिकां पल्लविकां भण। अद्य सविशेषं तमालवीथिकां सज्जीकुरु। मलयवतीसहितेन जामात्रा तत्र गन्तव्यमिति। आज्ञप्ता मया पल्लविका। तद्यावत् रजनीविरहवर्द्धितोत्कण्ठं प्रियवयस्यं शेखरकमन्विष्यामि। एष शेखरक.। कथमन्यां कामपि स्त्रियं प्रसादयति। तदिह स्थितैव जानामि कैषेति।

(ख) हरिहरपितामहानामपि गर्वितो यो न जानाति नन्तुम्।
सशेखरकश्चरणेषु तव नवमालिके पतित॥ ३४॥

(ग) दास्याः पुत्र! मत्तबालक! कुतोऽत्र नवमालिका?

(घ) कथं मामिति कृत्वा मदपरवशेन शेखरकेण आर्य्यात्रेय. प्रसाद्यते। तद्यावत् अलीकं कोपं कृत्वा द्वावप्येतौ परिहसिष्यामि।

(ङ) भर्त्तर्मुञ्चैतम्। न भवत्येषा नवमालिका। एषा पुनारोषारक्तलोचनैः पश्यन्ती आगता।

रोषारक्तै कोपलोहितै· लोचनैः नेत्रैः।

चेटी। [ उपसृत्य ] सेहरअ ! का उण एसा पसादीअदी ? (क)

विदूषकः। [ अवगुण्ठनमवतार्य्य ] भोदि ! कोबि बह्मणो अहं मन्दभागधेओ पउत्तो ( ख )।

विटः। [विदूषकं निरूप्य] अरे कविलमंकडआ तुमम्पि सेहरअं पदारेसि ? अरे चेड़ा ! गेण्ह एदं, जाव णोमालिअं पसादेमि ( ग )।

चेटः। जं भट्टके आणवेदि ( घ )।

विट। ( विदूषकं मुक्त्वा चेट्याः पादयो· पतति ) पसीद णोमालिए ! पसीद ( ङ )।

विदूषकः। ( आत्मगतम् ) एसो मे अबक्कमिदुं अवसरो (च)। ( पलायितुमीहते )।

चेटः। विदूषकं यज्ञोपवीते गृह्णाति यज्ञोपवीतं त्रुट्यति ) कहिं कहिं कविलमंकडआ पलाअसि ? ( छ ) ( तदुत्तरीयेणैव गलके बद्ध्वा कर्षति )

विदूषकः। भोदि णोमालिए ! पसीद मुञ्चावेहि मं ( ज )।

चेटी । ( विहस्य ) जइ भूमीए सीसं णिबेसिअ पादेसु मे पड़सि ( झ )

विदूषकः। [ सरोषं सकम्पञ्च ] भो ! गन्धव्वराअमित्तो बह्मणो भविअ दासीए धीआए पादेसु पड़इस्सं ( ञ )।

चेटी [ अङ्गुल्या तर्जयन्ती सस्मितम् ] दाणिं पाड़इस्सं, सेहरअ ! उठहि, पसण्णा दे अहं। [ कण्ठे गृह्णाति ] एसो उण जामाउकस्स पिअवयस्सो तुए खलीकिदो, एव्वञ्च सुणिअ कदापि भट्टा

(क) शेखरक ! का पुनरेषा प्रसाद्यते ?

(ख) भवति ! कोऽपि ब्राह्मणोऽहं मन्दभागधेय· प्रयुक्त·।

(ग) अरे कपिलमर्कट ! त्वमपि शेखरकं प्रतारयसि ? अरे चेट ! गृहाणैतम्। यावत् नवमालिका प्रसादयामि।

(घ) यत् भर्ता आज्ञापयति।

(ङ) प्रसीद नवमालिके ! प्रसीद।

(च) एष मेऽपक्रमितुमवसर।

(छ) क्क क्क कपिलमर्कट ! पलायसे ?

(ज) भवति नवमालिके ! प्रसीद मोचय माम्।

(झ) यदि भूमौ शीर्षं निवेश्य पादेषु मे पतसि।

(ञ) भो गन्धर्वराजमित्रो ब्राह्मणो भूत्वा दास्या· पुत्र्या· पादेषु पतिष्यामि।

मित्तावसू तव कुप्पइ, ता आदरेण सम्माणेहि णं (क)।

विटः। जं णोमालिआ आणवेदि। [ विदूषकं कण्ठे गृहीत्वा। ] अज्ज ! तुमं मए सम्बन्धिओत्ति करिअ परिहसिदो। [घूर्णन् ] किं सच्चकं जेव्व सेहरओ किं किदो परिहासो ?। [ उत्तरीयं वर्त्तुलीकृत्य आसनं ददाति ] इह उवविसदु सम्बन्धिओ ( ख )।

विदूषक। [ स्वगतम् ] दिट्ठिआ अवगदो दिश्र से मदावेगो ( ग ) ( उपविशति )।

विट। णोमालिए! उवविस तुमम्पि एदस्स पासे, जेण दुवेवि तुह्मे समं एव्व सम्माणइस्सं ( घ )।

चेटी। [ विदस्योपविशति ]

विटः। [ चषकमादाय ] अरे चेड! सुपूरिदं क्खु एदं करेहि चषकं सुराए ( ङ )।

चेट नाट्येन चषकभरणं करोति।

विटः। [ स्वशिरःशेखरात् पुष्पाणि गृहीत्वा चषके विन्यस्य जानुभ्यां स्थित्वा नवमालिकाया उपनयति। ] णोमालिए! चास्सअदेहि एदं एदस्स ( च )।

चेटी। [ सस्मितम् ] जं सेहरओ भणादि ( छ )। [ तथा कृत्वा विटस्यार्पयति ]।

विट। [ विदूषकस्य चषकमर्पयति ] एदं णोमालिआमुहसंसग्गविसेसवासिअरसं सेहरअएण केणावि अणासादिदपुव्वं

---

( क ) इदानीं पातयिष्यामि। शेखरक ! उत्तिष्ठ। प्रसन्ना तेऽहम् एष पुनर्जामाता प्रियवयस्यस्त्वया गणीकृतः। एवं श्रुत्वा कदापि भर्त्ता मित्रवसुस्तव कुप्यति। तदादरेण सम्मानयैनम्।

(ख) नवमालिका आज्ञापयति—आर्य्य ! त्वं मया सम्बन्धीति कृत्वा परिहसितः किं सत्यमेव शेखरक, किं कृतः परिहासः ? इह उपविशतु सम्बन्धी।

( ग ) दिष्ट्यापगतः इदानीमस्य मदावेगः।

( घ ) नवमालिके! उपविश त्वमपि एतस्य पार्श्वे, येन द्वावपि युवां सममेव सम्मानयिष्यामि।

( ङ ) अरे चेट! सुपूरितं खल्वेतं चषकं कुरु सुरया।

( च ) नवमालिके! आस्वादय एतमेतस्य।

( छ ) यत् शेखरको भणति।

ता पिवेहि एदं, किं ते अदोवि अवरं सम्माणं करइस्सं (क)।

नवमालिकेति, नवमालिकाया मुखसंसर्गेण मुखसङ्गमेन सविशेषं समधिकं यथास्यात्तथा वासित आपन्नगन्धो रसो यस्मिंस्तत्।

विदूषकः। [सवैलक्ष्यस्मितं कृत्वा] सेहरक! बह्मणो क्खु अहं (ख)।

विटः। जदि तुमं बह्मणो, ता कहिं ते णवसुत्तं (ग)।

नवसूत्रं नूतनं यज्ञोपवीतम्।

विदूषकः। तं क्खु मे इमिणा चेडेण कड्ढीअमाणं छिण्णं (घ)।

चेटी। [विहस्य] जइ एव्वं, ता वेदक्खराइम्पि दाव कतिवि उदाहर (ङ)।

विदूषकः। भोदि! इमिणा सीधुगन्धेण कहिं वेदक्खराइं, अहव किं मम भोदीए समं विवादेण, एसो दे बह्मणो पादेसु पडदि (च)। [इति पादयोः पतितुमिच्छति]।

सीधुगन्धेन मद्यगन्धेन।

चेटी। [हस्ताभ्यां निवार्य्य] मा क्खु एव्वं करेदु अज्जो, सेहरअ ओसर, ओसर; बह्मणो क्खु एसो। [विदूषकस्य पादयोः पतति] अज्ज! ण तुए कुपिदव्वं, सम्बन्धिकानुरूवो क्खु एसो मए परिहासो किदो (छ)।

विटः। अहम्पि णं पसादेमि [पादयोर्निपत्य] मरिसेदु मरिसेदु अज्जो, जं मए मदपरव्वसेण अवरद्धं, जेण अहं णोमालिआए सह आवाणअं गमिस्सं (ज)।

---

(क) इदं नवमालिकामुखसंसर्गसविशेषवासितरसं शेखरकादन्येन केनाप्यनास्वादितपूर्वम्। तत् पिबैतत्। किं ते अतोऽप्यपरं सम्मानं करिष्यामि।

(ख) शेखरक! ब्राह्मणः खल्वहम्।

(ग) यदि त्वं ब्राह्मणः तत् क्व ते नवसूत्रम्?

(घ) तत् खल्वनेन चेटेन कृष्यमाणं छिन्नम्।

(ङ) यद्येवम्, तद्वेदाक्षराण्यपि तावत् कत्यपि उदाहर।

(च) भवति! अनेन शीधुगन्धेन क्व वेदाक्षराणि, अथवा किं मम भवत्या सह विवादेन, एष ते ब्राह्मणः पादेषु पतति।

(छ) मा खल्वेवं करोत्वार्य्यः, शेखरक! अपसर अपसर, ब्राह्मणः खल्वेषः, आर्य्य! न त्वया कोपितव्यम्, सम्बन्धिकानुरूपः खल्वेष मया परिहासः कृतः।

(ज) अहमप्येनं प्रसादयामि, मर्षयतु मर्षयत्वार्य्यः, यत् मया मदपरवशेनापराद्धम्। येनाहं नवमालिकया सह आपानं गमिष्यामि।

विदूषकः । मरिसिदं मए, गच्छ तुह्मे, अहम्पि पिअवअस्सं पेक्खामि (क) ।

[ निष्क्रान्तो विटश्चेट्या सह चेटश्च ]

विदूषकः । अदिक्कन्तो वह्मणस्स अकालमित्तु ता जाव अहम्पि मत्तवालअसङ्कदूसिदो इह दिग्घिकाए एहाइस्सं । [ तथा करोति । नेपथ्याभिमुखमवलोक्य ] एसो पिअवअस्सोवि रुक्किणीं विअ हरी मलयवदीं अवलम्बिअ इदो एव्व आअच्छदि, ता जाव पासपरिवत्ती होमि (ख) ।

(ततः प्रविशति गृहीतवरनेपथ्यो नायको मलयवती विभवतश्च परिवारः)

नायकः । [ मलयवतीमवलोकयन् सहर्षम् ] ।

दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते ।
निर्य्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
याता वामतयैव मेऽद्य सुतरां प्रीत्यै नवोढा प्रिया ॥ ३५ ॥

कोमलालापं कुर्वन्नाह—दृष्टेति । नवोढा नवविवाहिता प्रिया दृष्टा अवलोकिता सती दृष्टिम् अधो नीचैर्ददाति, आभाषिता वार्तालापं क्रियमाणा अलापं भाषणं न कुरुते, शय्यायां पर्यङ्के परिवृत्य परिवर्तनं कृत्वा तिष्ठति, बलात् आलिङ्गिता आश्लिष्टा सती वेपते कम्पते । सखीषु वयस्यासु निर्यान्तीषु निष्क्रमन्तीषु वासभवनाद् गृहमध्यागारात् 'गर्भागारो वासगृहमित्यमरः' निर्गन्तुं निष्क्रमितुमेव ईहते चेष्टते यतते इति यावत्, इत्थं वामतया प्रतिकूलतया एव याता व्यवहरन्ती-त्यर्थः । अपि अद्य इदानीं मे जीमूतवाहनस्य सुतरां नितरां प्रीत्यैव स्नेहायैव कल्पते इति शेषः । अत्र नायिकारूपस्यैकस्य कर्तृकारकस्य ददातीत्यादिविविधक्रियाणां च सद्भावात् कारकदीपकालङ्कारः शार्दूलविक्रीडितं वृत्तम् ॥ ३५ ॥

[ मलयवतीं पश्यन् । ] प्रिये मलयवति !

हुङ्कारं ददता मया प्रतिवचो यन्मौनमासेवितं
यद्दावानलदीप्तिभिस्तनुरियं चन्द्रातपे तापिता ।
ध्यानं यत् सुबहून्यनन्यमनसा नक्तन्दिनानि प्रिये !
तस्यैतत् तपसः फलं मुखमिदं पश्यामि यत्तेऽधुना ॥ ३६ ॥

हुङ्कारमिति ।

---

(क) मर्षितं मया । गच्छतं युवाम् । अहमपि प्रियवयस्यं प्रेक्षे ।

(ख) अतिक्रान्तो ब्राह्मणस्याकालमुहूर्तः । तद्यावदहमपि मत्तवालकसङ्कदूषित इह दीर्घिकायां स्नास्यामि । एष प्रियवयस्योऽपि रुक्मिणीमिव हरिर्मलयवतीमवलम्ब्य इत एवागच्छति । तद्यावत् पार्श्वपरिवर्ती भवामि ।

खण्डान्वयः—

यत् प्रतिवचः मौनम् आसेवितम्, किं कुर्वता ? हुङ्कारं ददता, यन्मया इयं तनुः चन्द्रातपैः स्नापिता, कीदृशैः ? दावानलदीप्तिभिः, यन्मया हे प्रिये ? नक्तन्दिनानि ध्यातम्, कीदृशानि नक्तन्दिनानि ? सुबहूनि कीदृशेन मया ? अनन्यमनसा, तस्य तपसः एतत्फलम्, यद् अधुना ते इदं मुखं पश्यामि।

व्याख्या—

महतीं तपश्चर्यां विना तवेदं मुखावलोकनं न भवितुमर्हति तदाह—हुंकारमिति। हे प्रिये ? मया प्रतिवच प्रतिवचनं हुंकारं हुं हुं इत्याकारकशब्दं ददता सता यद् मौनं वाणीसंयमनम् आसेवितं कृतमित्यर्थः। यन्मया इयं तनुः इदं शरीरं दावानलदीप्तिभिः दावानलो वनाग्निस्तस्य दीप्तिरिव दीप्तिर्येषां विरहावस्थात्वात्, तादृशैः चन्द्रातपैः चन्द्रचन्द्रिकाभिः स्नापिता अभिषेचिता, यच्च अनन्यमनसा न अन्यस्या मनो यस्य तादृशेन मया सुबहूनि प्रभूतानि नक्तन्दिनानि रात्रिंदिनानि 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया। ध्यातं चिन्तितम्, तस्य 'मौनालम्बननित्यस्नानध्यानानि' इत्यङ्गत्रयविशिष्टस्य तपसः इदं फलम्, यद् अधुना इदानीं ते इदं मुखं पश्यामि। इत्यत्र भेदेऽभेदरूपाऽतिशयोक्तिः। शार्दूलविक्रीडितं वृत्तम् ॥३६॥

नायिका। [ अपवार्य्य ] हञ्जे चदुरिए ! ण केवलं दसणीओ पिअम्पि भणिदुं जाणादि ज्जेव (क)।

चेटी। [ विहस्य ] अदिपक्खवादिणि ! सच्चकं ज्जेव्व एदं, किं एत्थ पिअवअणं (ख)।

अतिपक्षपातिनि ? अत्यनुरागकारिणि ?।

नायकः। चतुरिके ! आदेशय मार्गं कुसुमाकरोद्यानस्य।

आदेशय आज्ञापय।

चेटी। एदु एदु भट्टा (ग)।

नायकः। [ परिक्रम्य नायिकां निर्दिश्य ] स्वैरं स्वैरमागच्छतु भवती।

स्वैरम् स्वेच्छम्। मन्दं मन्दमिति भावः। येन श्रमो माभूत्।

खेदाय स्तनभार एव किमु ते मध्यस्य हारोऽपरः
श्राम्यत्यूरुयुगं नितम्बभरतः काञ्च्यानया किं पुनः।
शक्तिः पादयुगस्य नोरुयुगलं वोढुं कुतो नूपुरौ
स्वाङ्गैरेव विभूषितासि वहसि क्लेशाय किं मण्डनम् ? ॥३७॥

'खेदायेति'

---

(क) हञ्जे ! चतुरिके ! न केवलं दर्शनीयः प्रियमपि भणितुं जानात्येव।
(ख) अतिपक्षपातिनी सत्यकमेवैतत्। किमत्र प्रियवचनम्।
(ग) एतु एतु भर्ता।

व्याख्या—

स्वभावसौन्दर्यं वर्णयति—खेदायेति । हे प्रिये स्तनभार कुचभार एव खेदाय परिश्रमाय अस्ति, पुनस्ते मध्यस्य मध्यभागस्य अपरोऽन्यो हारो मौक्तिकमाल्यं किमु ? किमर्थक इत्यर्थ.। अयं तु अधिकश्रमकर इत्याशय । ऊरुयुगं सक्थिद्वय जङ्घोपरिभागद्वयमिति यावत् "सक्थि क्लीबे पुमानूरु" रित्यमरः । नितम्बभरत स्त्रीकटे. पश्चिमभागो नितम्ब इत्युच्यते "पश्चान्नितम्ब स्त्रीकट्या" इत्यमर. तस्य भरतो भारेण श्राम्यति खेदं प्राप्नोति । पुनर् अनया ऊरुयुगोपरिवर्त्तमानया काञ्च्या मेखलया किम् ? इयं तु केवलं भाराधिक्यकरैवेत्यर्थ । पादयुगस्य चरणद्वयस्य शक्ति. सामर्थ्यं ऊरुयुगलं वोढु धर्तुं नास्ति, नूपुरौ मञ्जीरौ वोढुं कुत शक्ति ? । अतः प्रिये ? त्वं स्वाङ्गैरेव स्वभावालङ्कृतै स्वशरीरभागैरेव विभूषितासि अलङ्कृतासि, पुन क्लेशाय श्रमाय मण्डनम् अलंकरणं किं वहसि धारयसि ? । अत्रालंकाराणां धारणवैफल्ये स्वाङ्गविभूषितत्वस्य हेतुत्वप्रदर्शनात्का-व्यलिङ्गालंकारः । शार्दूलविक्रीडित वृत्तम् ॥ ३७ ॥

**चेटी । एदं क्खु तं कुसुमाअरुज्जाणं, ता पविसदु भट्टा ( क ) ।**

**[ सर्वे प्रविशन्ति ]**

**नायकः । [ विलोक्य ] अहो नु कुसुमाकरोद्यानस्य परा श्रीः । इह हि—**

परा महती श्री शोभा ।

**निष्यन्दश्चन्दनानां शिशिरयति लतामण्डपं कुट्टिमानां**
**तारं धारागृहाणां ध्वनिमनुतनुते ताण्डवं नीलकण्ठ. ।**
**यन्त्रोन्मुक्तश्च वेगाद्गलति विटपिनां पूरयन्नालवालान्**
**आपातोत्पीडहेलाहतकुसुमरज पिञ्जरोऽयं जलौघ ॥ ३८ ॥**

"निष्यन्द इति"

पदच्छेद —

निष्यन्द ( १।१ कर्ता ) चन्दनानाम् ( ६।३ ) शिशिरयति ( क्रिया ) लता-मण्डपम् ( २।१ कर्म ) कुट्टिमानाम् ( ६।३ ) तारम् ( २।१ कर्मप्रवचनीय कर्म वि० ) धारागृहाणाम् ( ६।३ ) ध्वनिम् ( २।१ कर्मप्रवचनीयकर्म ) अनु ( कर्म-प्रवचनीय ) तनुते ( क्रिया ) ताण्डवम् ( २।१ कर्म ) नीलकण्ठ ( १।१ कर्ता ) यन्त्रोन्मुक्त ( १।१ कर्तृवि. ) च ( अव्ययम् ) वेगात् ( ५।१ ) गलति ( क्रिया ) विटपिनाम् ( ६।३ ) पूरयन् ( शत्रन्तकर्तृवि ) आलवालान् ( २।३ शत्रन्तकर्म ) आपातोत्पीडहेलाहतकुसुमरज पिञ्जर ( १।१ कर्तृवि. ) अयम् ( १।१ कर्तृवि. ) जलौघ ( १।१ कर्ता ) ।

( क ) एतत् खलु तत् कुसुमाकरोद्यानम् । तत्प्रविशतु भर्ता ।

व्याख्या—

कुसुमाकरोद्यानं वर्णयति—निष्यन्द इति । चन्दनानां निष्यन्दो रसः कुट्टिमाना निबद्धभूमीनां "कुट्टिमोऽस्त्री निबद्धा भू"रित्यमरः । लतामण्डपं लतानिर्मितजनाश्रयं मण्डपोऽस्त्रीजनाश्रय" इत्यमरः । निबद्धभूमिस्थितं लतानिर्मितं जनोपवेशनस्थानमिति भावः । शिशिरयति शीतलयति । नीलकण्ठो मयूरः धारागृहाणां जलयन्त्राणां तारम् अत्युच्चं ध्वनिम् "अनुर्लक्षणे" इति कर्मप्रवचनीयसंज्ञायाम् "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीया ॥ अनुलक्षणीकृत्य ( मेघध्वनिभ्रान्त्या ) ताण्डवं नृत्यं तनुते करोति । यन्त्रोन्मुक्तः यन्त्रात् उन्मुक्तः प्रसृतः, आपातेति । आपातेन प्रबलपतनेन य उत्पीड आघातस्तेन हेलया अयत्नेन हताना पातिताना कुसुमाना पुष्पाणां यद् रजो धूलिः तेन पिञ्जरः पीतवर्णः "पिञ्जरोऽश्वान्तरे पीते" इति मेदिनी । एतादृशोऽयं जलौघः जलराशिः विटपिनां वृक्षाणाम् आलवालान् जलाधारवर्तुलाकारस्थानानि पूरयन् पूर्णीकुर्वन् वेगात् सहसा गलति पतति । अत्र धारागृहध्वनौ मेघध्वनिभ्रान्त्या मयूरनृत्यवर्णनाद् भ्रान्तिमानलङ्कारः । स्रग्धरा वृत्तम् ॥ ३८ ॥

अपिच—

अमी गीतारम्भैर्मुखरितलतामण्डपभुवः
परागैः पुष्पाणां प्रकटपटवासव्यतिकराः ।
पिबन्तः पर्याप्तं सह सहचरीभिर्मधुरसं
समन्तादापानोत्सवमनुभवन्तीव मधुपाः ॥ ३९ ॥

'अमी इति'

खण्डान्वयः—

अमी मधुपाः समन्ताद् आपानोत्सवम् अनुभवन्तीव, कीदृशा मधुपाः ? मुखरितलतामण्डपभुवः, कैः ? गीतारम्भैः, पुनः कीदृशाः ? प्रकटपटवासव्यतिकराः, कैः, ? पुष्पाणां परागैः, किं कुर्वन्तः ? मधुरसं पिबन्तः, कीदृशम् ? पर्याप्तम्, काभिः सह ? सहचरीभिः सह ।

व्याख्या—

कुसुमाकरोद्यानस्य परमश्रिया हेतुभूतान् द्विरेफान् वर्णयति—अमी इति । गीतारम्भैः गानप्रारम्भैः 'गीतं गानमिमे समे' इत्यमरः । मुखरिता ध्वनिता लतामण्डपानां लताजनाश्रयाणां भुवः पृथिव्यो यैः तादृशाः, पुष्पाणां परागैः रजोभिः प्रकटः प्रत्यक्षं गतः पटवासस्य पिष्टातस्य व्यतिकरः सम्पर्को येषां तादृशाः, अमी मधुपाः भ्रमराः सहचरीभिः मधुकरीभिः सह पर्याप्तं तृप्तिक्षमं मधुरसं मकरन्दरसं पिबन्तः सन्तः समन्तात् सर्वप्रकारेण आपानोत्सवम् मधुपानोत्सवम् अनुभवन्तीव साक्षात्कुर्वन्तीव । उत्प्रेक्षालङ्कारः । शिखरिणीवृत्तम् 'रसैः रुद्रैश्छिन्ना यमनसभलागः शिखरिणी' इति लक्षणात् ॥ ३९ ॥

विदूषकः । [ उपसृत्य ] जेदु जेदु भवं । सोत्थि भोदीए (क) ।

नायकः । वयस्य ! चिराद्दृष्टोऽसि ।

विदूषकः । भो वअस्स ! लहुं एव्व आअदोह्मि । किं उण विवाहमहूसवमिलिदसिद्धविज्जाहराणं आपाणदंसणकोदूहलेण परिब्भमन्तो एत्तिअं वेलं चिट्ठिदोह्मि । ता तुमम्पि दाव पेक्ख (ख)।

नायकः । एवं यथाह भवान् । [ समन्तादवलोकयन् ] वयस्य पश्य पश्य—

स्निग्धाङ्गा हरिचन्दनेन दधत सन्तानकानां स्रजो
माणिक्याभरणप्रभाव्यतिकरैश्चित्रीकृताच्छांशुका ।
सार्द्धं सिद्धजनैर्मधूनि दयितापीतावशिष्टान्यमी
मिथोभूय पिबन्ति चन्दनतरुच्छायासु विद्याधराः ॥ ४० ॥

व्याख्या—

मिलितानां सिद्धविद्याधराणां महोत्सवत्वं प्रदर्शयति स्निग्धाङ्गा इति । हरिचन्दनेन देवतरुविशेषेण अमरोक्त 'पञ्चैते देवतरव' इत्यादि द्रष्टव्यम् । स्निग्धानि 'चिक्कणानि चिक्कणं मसृणं स्निग्ध' मित्यमरः । अङ्गानि येषां ते, सन्तानकानां देववृक्षविशेषाणां स्रजो माल्यानि दधतः धारयन्तः, माणिक्येति, माणिक्यं रत्नविशेष एवाभरणं भूषणं तस्य प्रभाव्यतिकरैः दीप्तिसम्पर्कैः चित्रीकृतानि अनेकवर्णीकृतानि अच्छानि निर्मलानि अंशुकानि सूक्ष्मवसनानि येषां तादृशाः अमी विद्याधराः देवयोनिविशेषाः चन्दनतरुच्छायासु मिथोभूय मिलित्वा सिद्धजनैः सार्द्धं सह दयितापीतावशिष्टानि, दयिताभिः कान्ताभिः पूर्वं पीतानि पश्चाद् अवशिष्टानि मधूनि मद्यानि पिबन्ति । अत्र विद्याधरसिद्धानां स्वभाववर्णनात्स्वभावोक्तिः 'स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम्' इति साहित्योक्तेः ॥ ४० ॥

तदेहि वयमपि तां तमालवीथिं गच्छाम । [ परिक्रामति ]।

विदूषकः । एसा क्खु तमालवीहिआ, एदं सञ्चरन्ती दाव परिखेदिदा विअ भोदी दीसइ, ता इह एव्व फटिहमणिसिलाअले उपविसिअ वीसमह्म (ग)।

नायकः । वयस्य ! सम्यगुपलक्षितम्—

(क) जयतु जयतु भवान् । स्वस्ति भवत्यै ।

(ख) भो वयस्य ! लघु एवागतोऽस्मि । किं पुनर्विवाहमहोत्सवमिलितसिद्धविद्याधराणामापानदर्शनकौतूहलेन परिभ्रमन्नेतावतीं वेलां स्थितोऽस्मि । तत् त्वमपि तावत् प्रेक्षस्व ।

(ग) एषा खलु तमालवीथिका । एतां सञ्चरन्ती तावत् परिखेदितेव भवती दृश्यते । तदिहैव स्फटिकमणिशिलातले उपविश्य विश्राम्यावः ।

एतन्मुखं प्रियायाः शशिनं क्षिप्त्वा कपोलयोः कान्त्या ।
तापानुरक्तमधुना कमलं ध्रुवमीहते जेतुम् ॥ ४१ ॥

व्याख्या—

मुखस्य परिखेदत्वं वर्णयति 'एतदिति'। एतत् प्रियाया मलयवत्या मुखं कपोलयो गण्डयोः कान्त्या शोभया शशिनं चन्द्रं क्षिप्त्वा तिरस्कृत्य अधुना सम्प्रति तापेन सन्तापेन रक्तं लोहितवर्णं सत् ध्रुवं निश्चितं कमलं जेतुम् ईहते चेष्टते। इत्यत्र चन्द्रकमलाभ्यां मुखस्याधिक्यवर्णनाद् व्यतिरेकालङ्कारः ॥ ४१ ॥

[ नायिकां हस्ते गृहीत्वा । ] प्रिये ! इहोपविशामः ।

नायिका । जं अज्जउत्तो आणवेदि ! ( क ) ।

( सर्वे उपविशन्ति )

नायकः । [ नायिकाया मुखमुन्नमय्य पश्यन् ] प्रिये ! वृथैव त्वमस्माभिः कुसुमाकरोद्यानकुतूहलिभिः खेदिता । कुतः ।

एतत्ते भ्रूलतोद्भासि पाटलाधरपल्लवम् ।
मुखं नन्दनमुद्यानमतोऽन्यत् केवलं वनम् ॥ ४२ ॥

व्याख्या—

पुनर्मुखोत्कृष्टत्वं दर्शयति—एतदिति । हे प्रिये ? भ्रूलतोद्भासि भ्रुवौ एव लते ताभ्याम् उद्भासि उद्भासनशीलं दीप्यमानमित्यर्थः । पाटलेति, पाटलः श्वेतरक्तवर्णः 'श्वेतरक्तस्तु पाटल' इत्यमरः । अधरोऽधोवर्त्त्योष्ठः एव पल्लवः किसलयो यत्र तादृशं ते तव एतत् मुखं नन्दनोद्यानं नन्दनाख्यं स्वर्गस्थमुद्यानम्, अतोऽस्माद् अन्यद् भिन्नं केवलं वनमेव । अत्राधिकारूढवैशिष्ट्येन मुखे नन्दनोद्यानारोपादधिकरूढवैशिष्ट्यरूपकालङ्कारः । 'अधिकारूढवैशिष्ट्यं रूपकं यत्तदेव तत्' इति दर्पणोक्तेः ॥ ४२ ॥

चेटी । [ सस्मितं विदूषकं निर्दिश्य ] सुदं तुए भट्टिदारिआ कहं वण्णेदि । अज्ज उण अहं तुमं वण्णेमि ( ख )

विदूषकः । [ सहर्षम् ] भोदि । जीविदोह्मि । ता करेदु भोदी पसादं । जेण एसो मं पुणोवि ण भणादि जहा तुमं ईदिसो तादिसो कविलमक्कडाआरोत्ति ( ग ) ।

चेटी । अज्ज ! तुमं मए विवाहजागरणे खिज्जाअमाणणिमीलि-

---

( क ) यदार्यपुत्र आज्ञापयति ।

( ख ) श्रुतं त्वया भर्तृदारिका कथं वर्णयति, अद्य पुनरहं त्वां वर्णयामि ।

( ग ) भवति जीवितोऽस्मि तत् करोतु भवती प्रसादम् । येनैष मां पुनरपि न भणति । यथा त्वमीदृशः तादृशः कपिलमर्कटाकार इति ।

अअच्छो सोहणो दिट्ठो । ता तह एव्व चिट्ठ जेण वण्णेमि (क) ।

[ विदूषकः । तथाकरोति ] ।

चेटी । [ स्वगतम् ] जाव एसो णिमीलिअअच्छो चिट्ठदि ताव णीलरसाणुआरिणा तमालपल्लवरसेण मुहं कालीकरइस्सं (ख) ।

[ उत्थाय तमालपल्लवं निष्पीड्य विदूषकस्य मुखं कालीकरोति ।

निमीलिते अक्षिणी यस्य तथोक्तः । नीलरसानुकारिणा नीलरससदृशेन । कालीकरिष्यामि कृष्णवर्णीकरिष्यामि ।

[ नायको नायिका च विदूषकं पश्यतः ]

नायकः । वयस्य ! धन्य खल्वसि, योऽस्मासु तिष्ठत्सु भवानेवं वर्ण्यते ।

( नायिका । नायकस्य मुखं दृष्ट्वा स्मितं करोति ) ।

( नायकः । नायिकामुखं दृष्ट्वा ) ।

स्मितपुष्पोद्गमोऽयन्ते दृश्यतेऽधरपल्लवे ।
फलं त्वन्यत्र मुग्धाक्षि ! चक्षुषोर्मम पश्यतः ॥ ४३ ॥

व्याख्या—

ईषद्धस्यमानं मुखमवलोक्य वर्णयति—स्मितेति । हे मुग्धाक्षि ! सुन्दरनयने ! ते तव अधरपल्लवे अधर एव पल्लवः किसलयस्तत्र अयं स्मितपुष्पोद्गमः स्मितम् ईषद्धास्यमेव पुष्पं तस्य उद्गम उत्पत्तिर्दृश्यते । परं फलं तु अन्यत्र अन्यस्मिन् स्थाने, कुत्र ? तमाह, पश्यतोऽवलोकयतो मम जीमूतवाहनस्य चक्षुषोः नेत्रयोः, हर्षोत्पत्तेरिति भावः । अत्र स्मिते पुष्पस्य अधरे पल्लवस्य चारोपात् रूपकम् । पुष्परूपकारणस्यान्यत्र हर्षरूपकार्यस्य चान्यत्र विद्यमानत्वादसङ्गतिः, इति द्वयोः संसृष्टिः । "कार्यकारणयोर्भिन्नदेशतायामसङ्गति" इत्यसंगतिलक्षणम् ॥ ४३ ॥

विदूषकः । भोदि ! किं तुए किदं ? (ग) ।

चेटी । णं वण्णिओसि (घ) ।

( विदूषकः । हस्तेन मुखं प्रमृज्य दृष्ट्वा सरोषं दण्डकाष्ठमुद्यम्य । )

आः दासीए धीए ! राअउलं क्खु एदं । किं तव करइस्सं । [ नायकं निर्दिश्य ] भो तुम्हाणं पुरदो अहं दासीए धीआए खली-

(क) अयं त्वं मया विवाहजागरणे निद्रायमाणो निमीलिताक्षः शोभनो दृष्टः । तत्तथैव तिष्ठ येन वर्णयामि ।

(ख) यावदेष निमीलिताक्षस्तिष्ठति तावन्नीलरसानुकारिणा तमालपल्लवरसेन मुखं कालीकरिष्यामि ।

(ग) भवति ! किं त्वया कृतम् ?

(घ) ननु वर्णितोऽसि ।

किदो । ता किं मम इह ट्ठिदेण । अण्णदो गमिस्सं (क) ।
खलीकृत. तिरस्कृत· ।

( निष्क्रामति । )

चेटी । कुविदो मे अज्जअत्तेओ, जाव णं गदुअ पसादइस्सं (ख)
नायिका । हञ्जे चदुरिए किं मं एआइणिं उज्झिअ गच्छसि ? (ग) ।
चेटी । [ नायकं निर्दिश्य सस्मितम् ] एव्वं एआइणी चिरं होहि ( घ ) ।

[ इति निष्क्रान्ता ]

( नायक । नायिकाया मुखं पश्यन् ) ।

दिनकरकरैर्मृष्टं बिभ्रत् द्युतिं परिपाटलां
दशनकिरणैः संसर्पद्भिः स्फुटीकृतकेसरम् ।
यदि मुखमिदं मुग्धे ! सत्यं समं कमलेन ते
मधु मधुलिहः किन्नैतस्मिन् पिबन् प्रविभाव्यते ॥ ४४ ॥

व्याख्या—

सूर्यातपलोहितवर्णं वदनमवलोक्य वर्णयति—दिनकरेति । हे मुग्धे सुन्दरि ? दिनकरकरै. सूर्यकिरणैः मृष्टं स्पृष्टम् अतएव परिपाटलां श्वेतरक्तां द्युतिं कान्तिं बिभ्रत् धारयत्, संसर्पद्भिः इतस्तत. सञ्चरद्भिः दशनकिरणैः दन्तरश्मिभिः स्फुटीकृता· प्रकटीकृता. केसराः किञ्जल्काः ‘ किञ्जल्क. केसरोऽस्त्रिया ’ मित्यमरः । येन तादृश ते इदं मुख यदि सत्यं कमलेन समं तुल्यं तर्हि एतस्मिन् मुखे मधुलिहो मधुकर· ‘इगुपधत्वात्क ’ मधु मकरन्दं पिबन् किं किमर्थं न प्रविभाव्यते प्रतीयते । मधुलिहस्य कमले मधुपानं युक्तमेवेत्याशयः । उपमालङ्कारः ॥ ४४ ॥

नायिका । विहस्य मुखमन्यतो नयति ।

नायकः । तदेव पठति ।

( प्रविश्य पटाक्षेपेण )

चेटी । [ उपसृत्य ] एसो क्खु अज्जमित्तावसू कज्जेण केणवि

---

( क ) आ· दास्या. पुत्रि । राजकुलं खल्वेतत् । किं तव करिष्यामि । भो दुवयो पुरतोऽहं दास्या पुत्र्या खलीकृतः । तत् किं ममेह स्थितेन । अन्यतो गमिष्यामि ।

( ख ) कुपितो मे आर्यात्रेय , यावदेनं गत्वा प्रसादयिष्यामि ।

( ग ) हञ्जे चतुरिके ! किं मामेकाकिनीं उज्झित्वा गच्छसि ?

( घ ) एवमेकाकिनी चिरं भव ।

कुमारअं पेक्खिदुमिच्छदि ( क ) ।

पटाक्षेपेण पटस्य चित्रपटस्य जवनिकाया इति यावत् । पडदा इति ख्यातस्य ' पटश्चित्रपटे वस्त्र ' इति मेदिनी । आक्षेपेण अपसारणेन ।

नायकः । प्रिये ! गच्छ त्वमात्मनो गृहम्, अहमपि मित्रावसुं दृष्ट्वा त्वरितमागत एव ।

नायिका । चेट्या सह निष्क्रान्ता ।

(ततः प्रविशति मित्रावसुः )

मित्रा० । अनिहत्य तं सपत्नं कथमिव जीमूतवाहनस्याहम् ।
कथयिष्यामि हृतं तव राज्यं रिपुणेति निर्लज्जः ॥४५॥

व्याख्या—

अनिहत्येति । अहं मित्रावसुः जीमूतवाहनस्य स्वभगिनीपतेः तं प्रसिद्धं सपत्नं वैरिणं मतंगनामकं ' रिपौ वैरिसपत्नारिद्विषद्द्वेषणशत्रवः ' इत्यमरः । अनिहत्य न हत्वा, तव राज्यं रिपुणा शत्रुणा हृतं स्वायत्तीकृतम् इति निर्लज्जः सन् कथमिव कथयिष्यामि । मतंगस्य हननं विना जीमूतवाहनम्प्रति तद्वृत्तकथनं लज्जाकरमिति भावः ॥

अनिवेद्य च न युक्तं गन्तुमिति निवेद्य गच्छामि, कुमार ! मित्रावसुः प्रणमति ।

नायकः । [ मित्रावसुं दृष्ट्वा ] मित्रावसो ! इत आस्यताम् ।

मित्रावसुः । [ निरूप्य उपविशति ] ।

नायकः । [ निरूप्य ] मित्रावसो ! संरब्ध इव लक्ष्यसे ?

संरब्ध इव सम्भ्रान्त इव लक्ष्यसे प्रतीयसे ।

मित्रा० । कः खलु मतङ्गहतके संरम्भः ?

संरम्भः सम्भ्रमः ।

नायकः । किं कृतं मतङ्गेन ? ।

मित्रा० । स्वनाशाय किल युष्मदीयं राज्यमाक्रान्तम् ।

नायकः । [ सहर्षमात्मगतम् ] अपि नाम सत्यमेतत् स्यात् ? ।

मित्रा० । अतस्तदुच्छित्तये आज्ञां दातुमर्हति कुमारः । किं बहुना—

तदुच्छित्तये तस्य विनाशाय ।

संसर्पद्भिः समन्तात् कृतसकलवियन्मार्गयानैर्विमानैः
कुर्वाणाः प्रावृषीव स्थगितरविरुचः श्यामतां वासरस्य ।
एते याताश्च सद्यस्तव वचनमितः प्राप्य युद्धाय सिद्धाः
सिद्धं चोद्वृत्तशत्रुक्षयभयविनमद्राजकं ते स्वराज्यम् ॥ ४६ ॥

' संसर्पद्भिरिति '

( क ) पटाक्षेपेण केनापि कुमारं प्रेक्षितुमिच्छति ।

खण्डान्वयः—

एते सिद्धा याताः, कस्मै ? युद्धाय, कदा ? सद्यः, किं कृत्वा ? इतस्तव वचनं प्राप्य, किं कुर्वाणाः सिद्धाः ? वासरस्य श्यामतां कुर्वाणाः, कस्यामिव ? प्रावृषीव, कीदृशस्य वासरस्य ? स्थगितरविरुचः, कैः ? विमानैः, कीदृशैर्विमानैः ? समन्तात् ससर्पद्भिः, पुनः कीदृशैः ? कृतसकलवियन्मध्ययानैः। ते स्वराज्यं च सिद्धम् कीदृशम्, उद्वृत्तशत्रुक्षणभयविनमद्राजकम्।

व्याख्या—

मतंगहननं हतमेव जानीहीत्याह—संसर्पद्भिरिति। हे कुमार ? एते सिद्धा देवयोनिविशेषाः इतोऽस्मात्स्थानात् तव वचनम् आज्ञां प्राप्य समन्तात् चतसृषु दिक्षु संसर्पद्भिः संचरद्भिः कृतेति कृतं सकलस्य सर्वस्य वियतः आकाशस्य मध्ये यानं गमनं यैस्तादृशैः विमानैः व्योमयानैः प्रावृषीव वर्षर्ताविव स्थगितरविरुचः स्थगिता आच्छादिता रवेः सूर्यस्य रुक् दीप्तिर्यस्मिन् तादृशस्य वासरस्य दिवसस्य 'दिवसवासरौ' वित्यमरः, श्यामतां श्यामवर्णतां कुर्वाणाः सन्तः युद्धाय संग्रामाय, मतङ्गहतकेन सहेतिशेषः, याता गताः। अथच उद्वृत्तेति उद्वृत्ताद् उद्युक्तात् शत्रोः वैरिसकाशात्, त्वत्त इत्यर्थ, यत् क्षणभयं तेन विनमत् नम्रतां प्राप्नुवत् राजकं राजसमूहो यत्र तथोक्तं ते तव स्वराज्यं सिद्धम्। प्राप्तमित्यर्थः। उत्प्रेक्षालंकारः। यानसाधनयोः क्रिययोर्युगपत्कथनात्समुच्चयालंकारश्च 'गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये' इति लक्षणात्। स्रग्धरा वृत्तम्॥ ४६॥

अथवा, किं बहुभिः—

**एकाकिनापि हि मया रभसावकृष्टनिस्त्रिंशदीधितिसटाभरभासुरेण।**
**आरान्निपत्य हरिणेव मतङ्गजेन्द्रम् आजौ मतङ्गहतकं हतमेव विद्धि४७**

व्याख्या—

कमपि सहायमनवलम्ब्य तं हन्तुं समर्थोऽस्मीति वदति—एकाकिनेति रभसेति। रभसेन वेगेन अवकृष्टः आकृष्टो यो निस्त्रिंशः खड्गः तस्य दीधितयः किरणाः सटा जटा इव तासां भरेण अतिशयेन भासुरः दीप्तस्तादृशेन एकाकिना निःसहायेनापि मया मित्रावसुना हरिणा सिंहेन मतगजेन्द्रं मत्तगजराजमिव आजौ संग्रामे आराद् दूराद् निपत्य अतिक्रम्य मतंगहतकं दुष्टमतगं हतं विनाशितम् एव विद्धि जानीहि 'विदो ज्ञानार्थकात्कर्त्तरि लोट्'। उपमालंकारः। वसन्ततिलकं वृत्तम् 'उक्तं वसन्ततिलकं तभजा जगौ गः' इति लक्षणात्॥ ४७॥

नायकः। [ आत्मगतम् कर्णौ पिधाय ] अहह ! दारुणमभिहितम्, अथवा एवं तावत्। [ प्रकाशम् ] मित्रावसो ! कियदेतत्, पटुतरमपि बाहुशालिनि त्वयि सम्भाव्यते। किन्तु—

१ बाहुशालिनि बाहुभ्यां भुजाभ्यां शालते शोभते तच्छीलस्तस्मिन्।

स्वशरीरमपि परार्थे यः खलु दद्यादयाचितः कृपया।
राज्यस्य कृते स कथं प्राणिवधक्रौर्य्यमनुमन्ये ॥ ४८ ॥

व्याख्या—

दयावतारो जीमूतवाहनस्तु निजचित्ताभिप्रायं दर्शयन्नाह—स्वशरीरमिति । यो जीमूतवाहन खलु परार्थे परनिमित्ते अयाचितः अप्रार्थितेऽपि कृपया दयया स्वशरीरमपि दद्यात् । किं पुना राज्यादिकृते प्राणिहिंसेत्याह सोऽहं जीमूतवाहन राज्यस्य स्वशरीरादतितुच्छस्य कृते निमित्तं प्राणिवधक्रौर्यं प्राणिना जीवाना वधो हिंसैव क्रौर्यं घातुकत्वं तत् कथम् अनुमन्ये स्वीकरोमि कदापि नेति भाव. । अर्थापत्तिरलङ्कृतिः ॥ ४८ ॥

अपिच । क्लेशान् विहाय मम शत्रुबुद्धिरेव नान्यत्र ।
यदि त्वमस्मत्प्रियं कर्त्तुमीहसे, तदनुकम्प्यतामसौ क्लेशदासीकृतो राज्यस्य कृते राज्यस्य तपस्वी ।

क्लेशानिति । क्लेशान् कष्टानि विहाय त्यक्त्वा मम अन्यत्र शत्रुबुद्धिरेव न, क्लेश एव मम शत्रुरिति भाव । ईहसे यतसे । असौ तपस्वी वराको मतङ्ग राज्यस्य कृते क्लेशदायिहृत क्लेशेन दासीकृतः स्वाधीनीकृत । राज्यं दत्त्वाऽस्य क्लेशो निवार्यतामित्याशय ।

मित्रा० । [ सामर्षम् ] कथं नानुकम्पनीय ईदृशोऽस्माकमुपकारी कृपणश्च ।

नायकः । [ स्वगतम ] अनिवार्य्य संरम्भः कोपाक्षिप्तचेता न तावदयं शक्यते निवर्त्तयितुम्, तदेवं तावत् । [ प्रकाशम ] मित्रावसो ! उत्तिष्ठ अभ्यन्तरमेव प्रविशाव, तत्रैव तावत् त्वां बोधयिष्यामि, सम्प्रति परिणतमह , तथाहि ।

अनिवार्यसंरम्भ दुर्निवार्यकोप । अह: दिन परिणत गतप्रायमित्यर्थ ।

निद्रामुद्रावबन्धव्यतिकरमनिशं पद्मकोशादपास्यन्
आशापूरैककर्मप्रवणनिजकरप्रीणिताशेषविश्वः ।
दृष्टः सिद्धैः प्रसक्तस्तुतिमुखरमुखैरस्तमप्येष गच्छन्
एक श्लाघ्यो विवस्वान् परहितकरणायैव यस्य प्रसाद ॥४९॥

इति निष्क्रान्ता सर्वे ।

इति तृतीयोऽङ्क ।

* निद्रेति *

खण्डान्वयः—

एष एको विवस्वानेव श्लाघ्य , कीदृशो विवस्वान ? आशापूरैककर्मप्रवणनिजकरप्रीणिताशेषविश्व, किं कुर्वन ? पद्मकोशात् अनिशं निद्रामुद्रावबन्धव्यतिकरम् अपास्यन्, पुन कीदृश ? सिद्धैः दृष्ट , कीदृशै सिद्धै ? प्रसक्तस्तुतिमुखरमुखै ,

किं कुर्वन्? अस्तमपि गच्छन्। किमर्थं श्लाघ्यः? यतो यस्य प्रसादः परहित-करणायैव।

व्याख्या—

मित्रावसोर्ज्ञानायास्तं गच्छतः सूर्यस्यापि लोके परोपकारित्वमेव दर्शयति—निद्रेति। पद्मकोशात् कमलमुकुलात् अनिशं निरन्तरम्। निद्रेति, निद्रा निमीलनम् एव मुद्रावबन्धः सङ्कोचावस्थानं तस्य व्यतिकरं सम्बन्धनम् अपास्यन् दूरीकुर्वन् अनेन पद्मेषु परोपकारिता दर्शिता। आशेति। आशाना दिशां पूरः पूरणमेव एकं कर्म कार्यं तत्र प्रवणा रता ये निजकराः स्वकिरणाः तैः प्राणितं जीवितम् अशेषं सर्वं विश्वं जगद् येन सः। श्लेषपक्षे, आशा लोकाभिलाषा तस्या. पूरः पूरणमेव एकं कर्म तत्र प्रवणाः ये निजकराः स्वहस्तास्तैः प्राणितम् अशेषं विश्वं येन। अनेन सर्वलोक एव परोपकारित्वं ध्वनितम्। अतएव प्रसक्तेति। प्रसक्ताभि· निरन्तराभि स्तुतिभिर्मुखराणि मुखानि येषा तादृशै. सिद्धै· अस्तमपि गच्छन् दृष्टः, एतादृश एव एकोऽद्वितीयो विवस्वान् सूर्यःश्लाघ्यः प्रशंसनीय.। यतो यस्य प्रसाद. प्रसन्नता। उदय इत्यर्थ, परहितकरणायैव परोपकारकरणायैव। अत्र आशापूरे य एककर्मत्वारोपस्तत्र श्लिष्टकिरणेषु हस्तारोपो हेतु·। अत. परम्परितरूपकालङ्कार·। स्रग्धरावृत्तम्।

इति नागानन्दे सरस्वतीदधिमथीनामधेयाया टीकाया तृतीयोऽङ्कः॥



# अथ चतुर्थोऽङ्कः ।

[ तत प्रविशति कञ्चुकी गृहीतरक्तवस्त्रयुगल प्रतीहारश्च । ]

कञ्चुकी "अन्त·पुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्वकार्यार्थकुशल कञ्चुकीत्यभिधीयते" इति लक्षण. पुरुष । प्रतीहारो द्वारपालः ।

कञ्चुकी । अन्तःपुराणां विहितव्यवस्थः पदे पदे संस्खलितानि पश्य: जरातुरः सम्प्रति दण्डनीत्या सर्वां नृपस्यानुकरोमि वृत्तिम् ॥ ५० ॥

"अन्त पुराणामिति"

अन्त पुराणाम् ( ६।३ ) विहितव्यवस्थ. ( १।१ कर्तृवि ) पदे ( ७।१ पदे ( ७।१ ) संस्खलितानि ( २।३ शत्रन्तकर्म ) पश्यन् ( १ १ शत्रन्त कर्तृ विशे. ) जरातुरः ( १।१ कर्तृवि. ) सम्प्रति ( अव्ययम् ) दण्डनीत्या ( ३।१ सर्वाम् (२।१ कर्मवि.) नृपस्य (६।१) अनुकरोमि ( क्रिया ) वृत्तिम् (२।१ कर्म)

व्याख्या—

शिष्टै पर्दैर्नृपतिसादृश्यं स्वस्य वर्णयन्नाह—अन्तःपुराणामिति । जरातुर जरया वृद्धावस्थया आतुरः पीडित सन् अन्त पुराणी राज्ञां भुवनानाम् "स्त्र्यागा भूभुजामन्त पुर"मित्यमर. । विहितव्यवस्थः विहिता कृता व्यवस्था मर्यादा ये तेन सः, पदे पदे चरणे चरणे राजपक्षे विषये विषये संस्खलितानि पदस्खलनानि अन्यत्र दूषणानि पश्यन, एतादृशोऽहं सम्प्रति इदानीं दण्डनीत्या यष्टिमहणे अन्यत्र दण्डविधायकेन नीतिशास्त्रेण नृपस्य राज्ञ वृत्तिं व्यवहारम् अनुकरोमि तत्तुल्यं करोमीत्यर्थ । श्लेषानुप्राणितोपमालङ्कार । इन्द्रवज्रोपेन्द्रवज्रयोरुपज निर्देशम् । "अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता" इति लक्षणात्

प्रती० । आर्य्य वसुभद्र ! क नु खलु भवान् प्रस्थित ? ।

वसुभद्र इति कञ्चुकिनो नाम ।

कञ्चुकी । आदिष्टोऽस्मि देव्या मित्रावसुजनन्या, कञ्चुकिन् दशरात्रं त्वया यावन्मलयवत्या जामातुश्च रक्तवासांसि नेतव्यानि दुहिता च श्वशुरकुले वर्तते । जीमूतवाहनोऽपि युवराजेन सः समुद्रवेलां द्रष्टुमद्य गत इति श्रुयते, तन्न जाने, किं राजपुत्र्याः सकाशं गच्छामि, अथवा जामातुरिति ।

युवराजेन मित्रावसुना ।

प्रती० । आर्य ! वरं राजपुत्र्या सकाशं गन्तव्यम्, तत्र हि कदाचिदस्यां वेलायां जामाता स्वयमेवागतो भविष्यति ।

कञ्चुकी । साधूक्तम् , अथ भवान पुन. क प्रस्थितः ? ।

प्रती० । आदिष्टोऽस्मि महाराजविश्वावसुना, यथा भो सुनन्द ! गच्छ मित्रावसुं ब्रूहि, अस्मिन् दीपप्रतिपदुत्सवे मलयवत्या जामातुश्च यत् किञ्चित् प्रदीयते, तदुत्सवानुरूपं किञ्चिदागत्य चिन्त्यतामिति ।

सुनन्दनामा प्रतीहारः । दीपप्रतिपन्नामा तस्मिन्देशे कश्चिदुत्सवः यत्र विवाहानन्तर कस्यामपि प्रतिपत्तिथौ दीपादिदानं क्रियते ।

[ ततः प्रविशति जीमूतवाहनो मित्रावसुश्च ]

नायकः ।

शय्या शाद्वलमासनं शुचिशिला सद्म द्रुमाणामधः
शीतं निर्झरवारि पानमशनं कन्दाः सहाया मृगाः ।
इत्यप्रार्थितलभ्यसर्वविभवे दोषोऽयमेको वने
दुष्प्रापार्थिनि यत् परार्थघटनावन्ध्यैर्वृथा स्थीयते ॥ ५१ ॥

व्याख्या—

सर्व पदार्थ लभ्येऽपि वने परोपकारं विना चित्तं न रज्यत इत्याह—शय्येति । ाद्वलं बालतृणैर्हरितो देश "शाद्वलः शादहरित" इत्यमरः । शय्या शयनीयम्, ुचिशिला पवित्रशिला आसनम् उपवेशनस्थानम्, द्रुमाणां तरूणामधः सद्म हम्, शीतं निर्झरवारि प्रवाहजलं पानं पीयत इति पानं भावे ल्युट्, कन्दा ूलविशेषा अशन भोजनम्, मृगा वनजीवा सहायाः सहचारिणः, इत्येवम् प्रार्थितोऽयाचित एव लभ्यो लब्धुं योग्यः सर्वो विभवः सम्पत्तिर्यत्र तादृशे नेऽयमेको दोषः, यद् दुष्प्रापार्थिनि दुष्प्रापा अर्थिनो याचका यत्र तादृशे वने ारार्थः परोपकरस्तस्य घटनया विधानेन वन्ध्यैः विफलैः स्थीयते । अत्र शाद्वलादीनां प्रकृतार्थोपयोगित्वात्परिणामालंकार. "विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि । परिणामो भवे"दिति दर्पणोक्तेः । शार्दूलविक्रीडितं वृत्तम् ॥ ५१ ॥

मित्रा० । [ ऊर्ध्वमवलोक्य ] कुमार ! त्वर्य्यतां त्वर्य्यताम्, समयोऽयं चलितुमम्बुराशेः ।

नायकः । [ आकर्ण्य ] सम्यगुपलक्षितम् ।

उन्मज्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धत
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिताः ।
उच्चैरुच्चरति ध्वनि श्रुतिपथोन्माथी यथायं तथा
प्रायः प्रेङ्खदसंख्यशङ्खधवला वेलेयमागच्छति ॥ ५२ ॥

'उन्मज्जदिति'

खण्डान्वय.—

यथा अय ध्वनि उच्चै. उच्चरति, कीदृशो ध्वनिः ? उन्मज्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धत, पुन कीदृश ? श्रुतिपथोन्माथी, किं कुर्वन् ? सर्वाः पर्वत-

कन्दरोदरभुव प्रतिध्वानिता. कुर्वन्, तथा इयं वेला प्राय आगच्छति, कीदृशी वेला ? प्रेङ्खदसङ्ख्यशङ्खधवला ।

व्याख्या—

ध्वनिना वेलाऽऽगमनमनुमिनोति 'उन्मज्जदिति' उन्मज्जन्त: उद्गच्छमाना ये जलकुञ्जरेन्द्रा जलगजेन्द्रास्तेषाम् रभसेन वेगेन य आस्फाल जलोत्पीडनं तस्य अनुबन्धेन नैरन्तर्येण उद्धत. औत्कर्ष्येणेत, श्रुतिपथोन्माथी कर्णपथक्लेशकरः एतादृशोऽयं ध्वनि. शब्दः सर्वाः सकला. पर्वतकन्दरोदरभुव पर्वतदरीमध्यस्थपृथिवीः प्रतिध्वानिता. प्रतिध्वनियुक्ताः कुर्वन् सन् यथा उच्चै. उच्चरति उद्गच्छति तथा, 'प्राय प्रेङ्खदिति' प्रेङ्खन्त. इतस्ततश्चलन्तो येऽसंख्या अगणिताः शङ्खास्तैर्धवला शुक्लवर्णा इयं वेला समुद्रजलविकारः आगच्छति । अत्र प्राय.शब्दसूचितोत्प्रेक्षा । छेकानुप्रासोऽप्यलङ्कार: । शार्दूलविक्रीडितम् ॥ ५२ ॥

मित्रा० । नन्वियमागतैव पश्य ।

कवलितलवङ्गपल्लवकरिमकरोद्गारिसुरभिणा पयसा ।
एषा समुद्रवेला रत्नद्युतिरञ्जिता भाति ॥ ५३ ॥

'कवलितेति' एषा समुद्रवेला समुद्रतटी 'वेला कालेच जलधेस्तीरनीरविकारयो' रिति विश्वप्रकाशः । 'कवलितेति' कवलिता भक्षिता लवङ्गपल्लवा देवकुसुमपल्लवा यैः 'लवङ्गं देवकुसुम' मित्यमरः तादृशा ये करिणो जलगजा मकराश्च तेषाम् उद्गारि उद्गिरणशीलम् अतएव सुरभि सुगन्धि तादृशेन पयसा जलेन उपलक्षिता रत्नानां समुद्रस्थमणीनां द्युत्या कान्त्या रञ्जिता अलङ्कृता सती भाति शोभते । छेकानुप्रासालङ्कार । 'छेको व्यञ्जनसङ्घस्य सकृत्साम्यमनेकधा' इतिसाहित्यवचनात् । आर्यावृत्तम् ॥ ५३ ॥

नायक । मित्रावसो ! पश्य पश्य, शरत्समयपाण्डुभिः पयोदपटलैः प्रावृताः प्रालेयाचलशिखरश्रियमुद्वहन्त्येते मलयसानवः ।

शरत्समयपाण्डुभि शरदृतुशुक्लैः पयोदपटलै मेघसमूहै प्रावृताः आच्छन्ना एते मलयसानव. मलयपर्वतशिखराणि प्रालेयाचलशिखराणां हिमालयपर्वतसानूनां श्रियं शोभाम् उद्वहन्ति धारयन्ति । निदर्शनालङ्कार ।

मित्रा० । नैवामी मलयसानवः, नागानामस्थिसंघाता ह्यमी । अस्थिसङ्घाता अस्थिराशयः ।

नायकः । [सोद्वेगम्] कष्टम् किं निमित्तममी संघातमृत्यवो जाताः ।

मित्रा० । कुमार ! नैवामी संघातमृत्यवः, श्रूयतां यथैतत्, इह किल स्वपक्षपवनापास्तसमस्तसागरतलपूरं रसातलादुद्धृत्य प्रतिदिनमेकैकं नागमाहारयति वैनतेयः ।

'स्वपक्षेति' स्वपक्षयोः पवनेन वायुना अपास्तः दूरीकृतः समस्तसागरतलस्य पूरः प्रवाहो यत्र 'पूरः स्यादम्भसां वृद्धा' विति हैमः तद् यथा स्यात्तथा रसातलात्पातालात् उद्धृत्य निष्कास्य नागं भुजङ्गम् आहारयति भक्षयति वैनतेयो गरुडः।

नायकः। [सोद्वेगम्] कष्टमतिदुष्करं करोति, ततस्ततः ?

मित्रा०। ततः सकलनागविनाशाशङ्किना वासुकिना गरुत्मान् अभिहितः।

नायक। [सादरम्] किं मां प्रथमं भक्षयेति ?।

मित्रा०। नहि नहि।

नायक। किमन्यत् ?!

मित्रा०। इदमुक्तम्—त्वदभिपातसन्त्रासात् सहस्रशः स्रवन्ति भुजङ्गमानां गर्भाः, शिशवश्च पञ्चत्वमुपयान्ति, एवञ्च सन्ततिविच्छेदोऽस्माकम्, तव चैवं स्वार्थहानिः तत् यदर्थमभिपतति भवान् नागलोकं तमिह नागमेकैकमनुदिनं प्रेषयामि।

त्वदभिपातसन्त्रासात् तवापतनभयात् भुजङ्गमानां नागानाम्। स्रवन्ति पतन्ति। सन्ततिविच्छेदः सन्ततिविनाशः।

नायक। कथं रक्षिता नागराजेन पन्नगाः ?।

जिह्वासहस्रद्वितयस्य मध्ये नैकापि सा तस्य किमस्ति जिह्वा।
एकाहिरक्षार्थमहिद्विषेऽद्य दत्तो मयात्मेति यया ब्रवीति ॥ ५४ ॥

नागराजं धिक्करोति 'जिह्वेति' तस्य वासुकेः जिह्वानां रसनानां सहस्रद्वितयस्य सहस्रद्वयस्य मध्ये 'नागानां द्विजिह्वत्वात्' 'लेलिहानो द्विरसन' इत्यमरोक्तेः। वासुकेश्च सहस्रशिरस्कत्वाद् द्विसहस्रजिह्वत्वम्। किम् एकाऽपि सा तादृशी जिह्वा नास्ति ? यया जिह्वया मया शेषेण एकाहिरक्षार्थम् एकनागरक्षणार्थम् अहिद्विषे नागशत्रवे गरुडायेत्यर्थः। अद्य आत्मा स्वदेहो दत्तः समर्पितः, इत्येवं ब्रवीति कथयति। इन्द्रवज्रावृत्तम् 'स्यादिन्द्रवज्रा यदि तौ जगौ गः' इति तल्लक्षणम् ॥ ५४ ॥

मित्रा०। प्रतिपन्नं तत् पक्षिराजेन—

तद् वासुकिवचनं पक्षिराजेन गरुडेन प्रतिपन्नं स्वीकृतम्।

इत्येष भोगिपतिना विहितव्यवस्थो
यान् भक्षयत्यहिपतीन् पतगाधिराजः।
यास्यन्ति यान्ति च गताश्च दिने विवृद्धिं
तेषाममी तुहिनशैलरुचोऽस्थिकूटाः ॥ ५५ ॥

'इत्येष इति' इत्युक्तप्रकारेण भोगिपतिना नागराजेन विहिता कृता व्यवस्था मर्यादा यस्य तादृश एष पतगाधिराजः पक्षिराजः यान् अहिपतीन् नागपतीन्

भक्षयति खादति, तेषाम् अहिपतीनाम् तुहिनशैलरुचः तुहिनशैलस्य हिमपर्वतस्य रुगिव रुक् कान्तिर्येषां तादृशाः अमी पुरो दृश्यमाना अस्थिकूटा हड्डसङ्घाता दिने प्रतिदिनं विवृद्धि विशेषेण वृद्धिम् उन्नतिं यास्यन्ति प्राप्स्यन्ति यान्ति इदानीं प्राप्नुवन्ति याताः प्राप्ताश्च। कालत्रयेऽपि तद्विवृद्धिरेव भवति न न्यूनतेतिभाव। कारकदीपकम्। वसन्ततिलकं वृत्तम् ॥ ५५ ॥

नायकः। आश्चर्यम्!!!

सर्वाशुचिनिधानस्य कृतघ्नस्य विनाशिनः।
शरीरकस्यापि कृते मूढा पापानि कुर्वते ॥ ५६ ॥

'सर्वाशुचिनिधानस्येति' सर्वेषाम् अशुचीनाम् अपवित्रताना निधानस्य आश्रयभूतस्य सर्वद्वारेषु मलानि-सरणात् कृतघ्नस्य कृतं हन्तीति कृतघ्नं तादृशस्य 'एतादृक्पालनादिकरणेऽपि रागादिना दुःखप्रदत्वात्' विनाशिन. ध्वंसशीलस्य एतादृशस्य शरीरकस्य क्षुद्रशरीरस्यापि कृते निमित्तं मूढा अज्ञानिन. परुषा पापानि दुष्कर्माणि कुर्वते। अत्र शरीरविशेषणानां साभिप्रायत्वात्परिकरालंकार 'उक्तिविशेषणैः साभिप्रायैः परिकरो मत' इति दर्पणोक्तेः। दयावीरत्वं तु जीमूतवाहनवाक्येषु प्रपूरितमेव ॥ ५६ ॥

अहो! कष्टपर्य्यवसानेयं विपत्तिर्नागानाम्। [आत्मगतम्] अपि शक्नुयामहं स्वशरीरसमर्पणेन एकस्य नागस्य प्राणपरिरक्षां कर्त्तुम्।

कष्टेन दुःखेन पर्यवसानम् अन्तो यस्यास्तादृशी।

[ततः प्रविशति प्रतीहारः]

प्रती०। आरूढोऽस्मि गिरिशिखरम्, यावन्मित्रावसुमन्विष्यामि [परिक्रम्य] अयं मित्रावसुर्जामातुः समीपे तिष्ठति। [उपसृत्य] विजयेतां कुमारौ।

मित्रा०। सुनन्द! किं निमित्तमिहागमनम्?

प्रती०। [कर्णे कथयति]।

मित्रा०। कुमार! ततो मामाह्वयति।

नायकः। गम्यताम्।

मित्रा०। कुमारेणापि बहुप्रत्यवायेऽस्मिन् प्रदेशे न चिरं स्थातव्यम्। [इति निष्क्रान्त]

बहुप्रत्यवाये अतिभयंकरे अत्यनिष्टजनके वा।

नायकः। यावदहमप्यस्माद्गिरिशिखरादवतीर्य्य समुद्रतटमवलोकयामि। [परिक्रामति]।

नेपथ्ये। हा पुत्तअ संखचूड! कहं वावादिअमाणो अज्ज किल

तुमं मए पेक्खिदव्वो ? ( क )।

नायकः। [ आकर्ण्य ] अये ! योषित इवार्त्तप्रलापः, केयं, कुतो वास्या भयमिति स्फुटीकरिष्ये। [ परिक्रामति ]

(ततः प्रविशति रुदत्या वृद्धयानुगम्यमानः शङ्खचूडो गोपायितवस्त्रयुगलश्च किंकरः)

गोपायितवस्त्रयुगलः गोपायितं रक्षितं प्रच्छन्नतया गृहीतं वस्त्रयुगलं वसनद्वयं येन तादृशः किंकरो वासुकिभृत्यः।

वृद्धा। [ सास्रम् ] हा पुत्तअ सङ्खचूड ! कहं वावादिअमाणो अज्ज किल तुमं मए पेक्खिदव्वो। [ चिबुकं गृहीत्वा ] इमिणा मुहचन्देण विरहिअं दाणीं अन्धआरीभविस्सदि पाआलं ( ख )।

चिबुकं मुखस्याधोभागम्। 'अधस्ताच्चिबुक' मित्यमरः।

शङ्ख०। अम्ब ! किमिति वैक्लव्येन सुतरां नः पीडयसि ?

वैक्लव्येन व्याकुलीभावेन।

वृद्धा। [ निर्वर्ण्य पुत्रस्याङ्गानि स्पृशन्ती ] हा पुत्त ! कहं दे अदिट्ठसूरकिरणं सुउमारसरीरं णिग्घिणो गरुडो आहारइस्सदि ? ( ग )। [ कण्ठं गृहीत्वा रोदिति ]।

शङ्ख०। अम्ब ! अलं परिदेवितेन, पश्य।

परिदेवितेन विलपितेन।

क्रोडीकरोति प्रथमं यदा जातमनित्यता।
धात्रीव जननी पश्चात्तदा शोकस्य कः क्रमः॥ ५७॥

परिदेवनस्य न करणे हेतुमाह 'क्रोडीति' अनित्यता ( कर्त्री ) अचिरस्थायिता यदा धात्रीव उपमातेव जातम् उत्पन्नं मानवं प्रथमं पूर्वमेव क्रोडीकरोति अङ्कीकरोति। जननी माता तु पश्चात् क्रोडे धारयति तदा शोकस्य चिन्तायाः क्रमोऽवसर एव कः ? न कोऽपि शोकक्रम इत्यर्थः। उपमालंकारः॥ ५७॥

[ गन्तुमिच्छति ]

वृद्धा। पुत्तअ ! चिट्ठ मुहुत्तअं जाव दे वअणं पेक्खामि (घ)।

किङ्कर। एहि कुमाल सङ्खचूड ! किं ते एदाए भणन्तीए पुत्त-

---

(क) हा पुत्रक शङ्खचूड ! कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्यः ?

(ख) हा पुत्रक शङ्खचूड ! कथं व्यापाद्यमानोऽद्य किल त्वं मया प्रेक्षितव्यः ? अनेन मुखचन्द्रेण विरहितमिदानीमन्धकारीभविष्यति पातालम्।

( ग ) हा पुत्र ! कथं ते अदृष्टसूर्यकिरणं सुकुमारशरीरं निर्घृणो गरुड आहारयिष्यति ?।

( घ ) पुत्र ! तिष्ठ मुहूर्तम्, यावत् ते वदनं प्रेक्षे।

सिणेहमोहिदा क्खु एसा ण जाणेदि लाअकज्जं ? (क)।

शङ्ख०। अयमागच्छामि।

किङ्करः। [आत्मगतम् अग्रतोऽवलोक्य] आणीदो क्खु एसो मए वज्झसिलासमीवे ता वज्झचिण्हं दाइस्सं (ख)।

वध्यशिला यस्यां पतितं रक्तवसनान्वितं नागमुत्थाप्य गरुडो मलयोपरि गच्छति।

नायकः। इयमसौ योषित्। [शङ्खचूडं दृष्ट्वा] नूनमनेनास्याः सुतेन भवितव्यम् तत् किमाक्रन्दति ?। [समन्तादवलोक्य] न खल्वस्या भयकारणं किञ्चित् पश्यामि कुतोऽस्या भयमिति यावदुपसर्पामि प्रसक्त एवायमेतेषामालापः कदाचिदत एवास्याभिव्यक्तिर्भविष्यति तद्विटपान्तरितस्तावच्छृणोमि।

प्रसक्त· सुतरां प्रचलित एव। अभिव्यक्ति स्पष्टता। विटपान्तरित वृक्षव्यवहितः।

किङ्करः [सास्रं कृताञ्जलिः] कुमाल सङ्खचूड एसो सामिणो आदेसोत्ति करिअ ईदिसं णिट्ठुरं मन्तीअदि (ग)।

शङ्ख०। भद्र! कथय।

किङ्करः। नागलाआ वासुई आणवेदि (घ)।

शङ्ख० [शिरस्यञ्जलिं बद्ध्वा सादरम्] किमाज्ञापयति देव ?।

किङ्करः। एदं लत्तंसुअ जुअलं परिहिअ आलुह वज्झसिलं जेण लत्तंसुअं उवलक्खिअ गलुडो आहालइस्सदित्ति (ङ)।

नायकः। [श्रुत्वा] कथमसौ वासुकिना परित्यक्त ?।

किङ्करः। कुमाल! गेण्ह एदं वसणजुअलं (च)। [इत्यर्पयति]

शङ्ख०। [सादरम्] उपनय। [गृहीत्वा] शिरसि स्वाम्यादेशः।

वृद्धा। [पुत्रस्य हस्ते वाससी दृष्ट्वा सोरस्ताडम्] हा वच्छ!

---

(क) एहि कुमार शङ्खचूड! किं ते एतया भणन्त्या, पुत्रस्नेहमोहिता खल्वेषा, न जानाति राजकार्यम् ?

(ख) आनीतः खल्वेष मया वध्यशिलासमीपे, तत् वध्याचिह्न दास्यामि।

(ग) कुमार शङ्खचूड! एष स्वामिन आदेश इति कृत्वा ईदृशं निष्ठुरं मन्त्र्यते।

(घ) नागराजो वसुकि आज्ञापयति।

(ङ) इदं रक्तांशुकयुगलं परिधाय आरोह वध्यशिलाम्। येन रक्तांशुकमुपलक्ष्य गरुड आहारयिष्यतीति।

(च) कुमार! गृहाणैतद् वसनयुगलम्।

एदं क्खु वज्जपाडसरिणभं सम्भावीअदि (क)। [मोहं गता]।

सोरस्ताडं वक्षस्ताडनेन सहितम्।

किङ्करः। आसण्णा गरुडस्स आअमणवेला ता लहुं गच्छामि (ख)। [इति निष्क्रान्तः]।

शङ्ख०। अम्ब! समाश्वसिहि।

वृद्धा। [समाश्वस्य सास्रम्] हा पुत्तअ! मणोरहसअलद्ध! कहिं पुणो तुमं पेक्खिस्सं (ग)। [कण्ठे गृह्णाति]।

नायक अहो! नैर्घृण्यं गरुडस्य अपि च—

मूढाया मुहुरश्रुसन्ततिमुचः कृत्वा प्रलापान् बहून्
कस्त्राता तव पुत्रकेति कृपणं दिक्षु क्षिपन्त्या दृशम्।
अङ्के मातुरवस्थितं शिशुमिमं त्यक्त्वा घृणामश्नतः।
चञ्च्वग्रेण खगाधिपस्य हृदयं वज्रेण मन्ये कृतम् ॥ ५८ ॥

'मूढाया इति'

खण्डान्वयः—

अहं खगाधिपस्य हृदयं वज्रेण कृतं मन्ये। किं कुर्वतः खगाधिपस्य? इमं शिशुम् अश्नतः, केन? चञ्च्वग्रेण, किं कृत्वा? घृणां त्यक्त्वा, कीदृशं शिशुम्? मातुः अङ्केऽवस्थितम्, कीदृश्या मातुः? मूढायाः, पुनः कीदृश्याः? अश्रुसन्ततिमुचः, किं कृत्वा? मुहुः बहून् प्रलापान् कृत्वा, किं कुर्वत्याः सत्याः? हे पुत्रक? तव कः त्राता? इति कृपणं दिक्षु दृशं क्षिपन्त्याः सत्याः।

व्याख्या—

गरुडस्य निर्दयत्वं वर्णयति 'मूढाया इति' मूढाया मूर्च्छां गतायाः मुहुः पुनः पुनः बहून् प्रलापान् विलापान् कृत्वा अश्रुसन्ततिमुचः नेत्रजलराशिं त्यजन्त्याः, हे पुत्रक तव शङ्खचूडस्य कः त्राता रक्षिता? इत्येवं कृपणं दीनं यथास्यात्तथा दृशं दृष्टिं दिक्षु आशासु क्षिपन्त्याः नुदन्त्याः, एतादृश्या मातुर्जनन्या अङ्के क्रोडेऽवस्थितम् उपविष्टम् इमं शिशुं बालकं शङ्खचूडं घृणां दयां त्यक्त्वा चञ्च्वग्रेण चञ्च्वा अग्रभागेन अश्नतो भक्षयतः खगाधिपस्य पक्षिराजस्य हृदयम् अन्तःकरणं वज्रेण अशनिना कृतं निर्मितम् अहं मन्ये सम्भावयामि। एतादृङ् निर्दयत्वात्। उत्प्रेक्षालंकारः। शार्दूलविक्रीडितं वृत्तम् ॥ ५८ ॥

शङ्ख० [आत्मनोऽश्रूणि निवारयन्] अम्ब! किमतिवैक्लव्येन? ननु समाश्वसिहि।

---

(क) हा वत्स! इदं खलु वज्रपातसन्निभं सम्भाव्यते।
(ख) आसन्ना गरुडस्यागमनवेला, तल्लघु गच्छामि।
(ग) हा पुत्रक! मनोरथशतलब्ध! क्व पुनस्त्वां प्रेक्षिष्ये?

वृद्धा । [ साम्रम ] कहं समस्सासिस्सं किं एक्कपुत्तकोत्ति कदुअ साणुकम्पेण णाअराएण पेसिदोसि, हा कहं अविच्छिण्णे जीअलोए मम पुत्तओ सुमरिदो, सव्वधा अहं ह्मि मन्दभग्गा ( क ) । [ मूर्च्छति ] ।

अविच्छिन्न अपरे जीवलोके संसारे ।

नायकः । [ सकरुणम् ]

आर्त्तं कण्ठगतप्राणं परित्यक्तं स्वबन्धुभिः ।
त्राये नैनं यदि ततः कः शरीरेण मे गुणः ? ॥ ५६ ॥

'आर्त्तमिति' यदि अहम् आर्त्तं कातरं कण्ठगतप्राणम् मरणाशमित्यर्थं । स्वबन्धुभिः परित्यक्तम् एतादृशम् एनं शंखचूडं न त्राये रक्षामि ततो मे शरीरेण को गुणः ? न कोऽपीत्यर्थः । अत्रापि परिकरालंकारः ॥ ५६ ॥

तद् यावदुपसर्पामि ।

शङ्ख० । अम्ब ? संस्तम्भयात्मानम् ।

संस्तम्भय स्थिरीकुरु आत्मानं स्वचित्तम् ।

वृद्धा । हा पुत्तअ । जदा णाअलोअपरिरक्खएण वासुइणा परिच्चत्तोसि, तदा को दे अवरो परित्ताणं करिस्सदि ( ख ) ।

नायकः । [ उपसृत्य ] नन्वहमहम् ।

वृद्धा । [ नायकं दृष्ट्वा ससम्भ्रममुत्तरीयेण पुत्रकमाच्छाद्य नायकम् उपसृत्य जानुभ्यां स्थित्वा ] विणदाणन्दण ! वावादेहि मे अहं दे णाअराएण आहारणिमित्तं परिकप्पिदा ( ग ) ।

उत्तरीयेण उपरिधृतवस्त्रेण ।

नायक । [ साम्रम् ] अहो । पुत्रवात्सल्यम् ! ! !

पुत्रवात्सल्यं पुत्रस्नेह ।

अस्या विलोक्य मन्ये पुत्रस्नेहेन विक्लवत्वमिदम् ।
अकरुणहृदयः करुणां करिष्यति भुजङ्गशत्रुरपि ॥ ६० ॥

'अस्या इति' अस्या वृद्धायाः पुत्रस्नेहेन पुत्रवात्सल्येन इदम् अतिदुःसह

---

( क ) कथं समाश्वसिष्यामि ? किमेकपुत्रक इति कृत्वा सानुकम्पेन नागराजेन प्रेषितोऽसि ? हा कथमविच्छिन्ने जीवलोके मम पुत्रक स्मृत । सर्वथाहमस्मि मन्दभाग्या ।

( ख ) हा पुत्रक ! यदा नागलोकपरिरक्षकेण वासुकिना परित्यक्तोऽसि, तदा कस्ते अपरः परित्राणं करिष्यति ?

( ग ) विनतानन्दन ! व्यापादय माम् अहं ते नागराजनाहारनिमित्तं परिकल्पिता ।

विकलवत्वं विह्वलत्वं विलोक्य दृष्ट्वा अकरुणहृदयः निर्दयमानसो भुजङ्गशत्रुः गरुडोऽपि करुणां दयां करिष्यतीति मन्ये सम्भावयामि। उत्प्रेक्षा ॥ ६० ॥

शङ्ख। अम्ब! अलं त्रासेन, न नागशत्रुः, पश्य—

महाहिमस्तिष्कविभेदमुक्तरक्तच्छटाचर्चितचण्डचञ्चुः।
क्वासौ गरुत्मान् क्व च नाम सौम्यस्वभावरूपाकृतिरेष साधुः ॥६१॥

नागशत्रुशङ्कां निवारयति 'महाहीति' महताम् अहीनां भुजङ्गानां मस्तिष्कस्य मस्तकसम्भूतघृताकारस्नेहस्य विभेदेन पाटनेन मुक्ताभिः त्यक्ताभिः रक्तच्छटाभि रक्तधाराभिः चर्चिता रञ्जिता चण्डा भीषणा चञ्चुर्यस्य तादृशोऽसौ गरुत्मान् गरुडः क्व? अथ च नाम सम्भावनायाम्, सौम्यस्वभावरूपाकृतिः सौम्य. स्वभावो रूपम् आकृतिश्च यस्य तादृश एष साधुः परोपकारावतारः क्व। अत्र क्वपदेन गरुडनिषेधाज्जीमूतवाहनस्य च निश्चयात्सपाभिश्चयालंकार.। उपजातिर्वृत्तम् ॥ ६१ ॥

वृद्धा। अहं क्खु, तुज्झ मरणभीआ सव्व एव्व लोअं गरुअमअं पेक्खामि (क)।

नायकः। अम्ब! किं पुनःपुनरभिहितेन? ननु कर्मणैव सम्पादयामि।

कर्मणा कार्येणैव स्वशरीरदानरूपेण सम्पादयामि साधयामि त्वत्पुत्ररक्षणरूपं कार्यमिति शेषः।

वृद्धा [शिरस्यञ्जलिं बद्ध्वा] पुत्तअ! चिरं जीअ (ख)।

नायकः। ममैतदम्बार्पय वध्यचिह्नं प्रावृत्य यावद्विनतात्मजाय।
पुत्रस्य ते जीवितरक्षणाय स्वदेहमाहारयितुं ददामि ॥६२॥

ननु कर्मणैव सम्पादयामि इति यदुक्तं तदेव स्पष्टमाह 'ममेति' हे अम्ब! मातः! एतद् वध्याचिह्नं वध्यनागलक्षणं रक्तवस्त्रयुगलं मम जीमूतवाहनस्य अर्पय देहि। यावत् येनेत्यर्थः। प्रावृत्य प्रच्छाद्य स्वात्मानमिति शेष.। ते तव पुत्रस्य जीवितरक्षणाय प्राणरक्षार्थं स्वदेहं निजशरीरं विनतात्मजाय वैनतेयाय आहारयितुं भक्षयितुं ददामि समर्पयामि। उपजातिर्वृत्तम् ॥ ६२ ॥

वृद्धा। [कर्णौ पिधाय] पडिहदे क्खु एद, तुमम्पि संखचूडणिव्विसेसो पुत्तो, अदवा सङ्खचूडादोवि अहिअअरो जो एव्वं बन्धुजणपरिचत्तं वि पुत्तकं मे सरीरप्पदाणेण रक्खिदुमिच्छसि (ग)।

(क) अहं खलु तवमारणभीता सर्वमेव लोकं गरुडमयं प्रेक्षे।
(ख) पुत्रक! चिरं जीव।
(ग) प्रतिहत खल्वेतत्, त्वमपि शङ्खचूडनिर्विशेष पुत्र, अथवा शङ्खचूडादप्यधिकतर य एवं बन्धुजनपरित्यक्तमपि पुत्रकं मे शरीरप्रदानेन रक्षितुमिच्छसि।

प्रतिहतम् एवं कदापि न भवेदित्यर्थः, शङ्खचूडनिर्विशेष: शङ्खचूडादभिन्न ।

शङ्ख० । अहो !! जगद्विपरीतमस्य महासत्त्वस्य चेतः, कुतः--

महासत्त्वस्य महात्मनः ।

विश्वामित्रः श्वमांसं श्वपच इव पुराभक्षयद् यन्निमित्तं
नाडीजङ्घो निजघ्ने कृततदुपकृतिर्यत्कृते गौतमेन।
पुत्रोऽयं कश्यपस्य प्रतिदिनमुरगानत्ति तार्क्ष्यो यदर्थं
प्राणांस्तानेष साधुस्तृणमिव कृपया यः परार्थं ददाति ॥ ६३ ॥

जगद्विपरीतत्वमेव दर्शयति ' विश्वामित्र इति ' विश्वामित्रः तदाख्यो मुनि यन्निमित्तं येषां प्राणानां निमित्तं पुरा पूर्वकाले श्वपच इव चण्डाल इव श्वमांसं कुक्कुरमांसम् अभक्षयत् आहारयत, यत्कृते येषां कृते निमित्तं कृततदुपकृति कृता तस्य गौतमस्य उपकृति. उपकारो येन तादृशो नाडीजङ्घ तदाख्य ऋषिः गौतमेन निजघ्ने निहत । अयं कश्यपस्य पुत्रः तार्क्ष्यः गरुडः सत्कुलोत्पन्नत्वप्रदर्शनाय पितृनामोच्चारणम्, एतादृङ्मुनिपुत्रत्वेऽपि येषां प्राणानां कृते महत्पापाचरणमित्यर्थः । यदर्थं यत्प्राणार्थं प्रतिदिनम् उरगान् नागान् अत्ति भक्षयति, तान् प्रतिपालनीयान् प्राणान् य एष साधुः कृपया दयया परार्थं परोपकारार्थं तृणमिव ददाति, अत एव जगद्विपरीतमस्य चेत इत्याशयः । अत्रोपमोत्प्रेक्षयो संसृष्टि । स्रग्धरावृत्तम् ॥ ६३ ॥

[नायकमुद्दिश्य] भो महासत्त्व ! त्वया दर्शिता एव आत्मप्रदानव्यवसायनिर्व्याजा मयि कृपालुता, तदलमनेन निर्बन्धेन, पश्य ।

आत्मेति, आत्मन: प्रदाने यो व्यवसाय उद्योगस्तेन निर्व्याजा निश्कपट निर्बन्धेन आग्रहेण ।

जायन्ते च म्रियन्ते च मादृशाः क्षुद्रजन्तव ।
परार्थे बद्धकक्षाणां त्वादृशामुद्भवः कुतः ? ॥ ६४ ॥

निर्बन्धाकरणे हेतुमाह ' जायन्त इति ' मद्विधा: मत्सदृशा क्षुद्रजन्तव तुच्छप्राणिनस्तु जायन्ते उत्पद्यन्ते म्रियन्ते च मादृशानां परोपकाररहिताना जन्मनि हर्षो न मरणे च शोको नेति भाव । परार्थे बद्धकक्षाणां नित्यसन्नद्धानां त्वादृशा भवादृशाम् उद्भव उत्पत्ति कुतः ? अतीव दुर्लभ्य इति भाव । व्यतिरेकालङ्कारः ।

तत् किमनेन निर्बन्धेन मुच्यतामयमध्यवसायः ।

नायकः । शङ्खचूड ! न मे चिराल्लब्धावसरस्य अस्य परार्थसम्पादनामनोरथस्यान्तरायं कर्त्तुमर्हसि, तदलं विकल्पेन दीयता मेतद् वध्यचिह्नम् ।

लब्धावसरस्य प्राप्तकालस्य । अन्तराय विघ्नम् । विकल्पेन अन्यथा परिकल्पनेन ।

शङ्ख०। भो महासत्त्व ! किमनेन वृथात्मायासेन ? न खलु शङ्खधवलं शङ्खपालकुलं शङ्खचूडो मलिनीकरिष्यति, यदि ते वयमनुकम्पनीयाः तदा इयमस्मद्विपत्तिविक्लवा मा यथा जीवितं जह्यात् तथाभ्युपायश्चिन्त्यताम्।

वृथा य आत्मायासः आत्मप्रयत्नस्तेन। अस्मद्विपत्तिविक्लवा अस्माकं विपत्त्या विक्लवा विह्वला मा जीवितं जह्यात् न प्राणान् त्यजेत्।

नायकः। किमत्र चिन्त्यते ?

म्रियते म्रियमाणे या त्वयि जीवति जीवति।
तां यदीच्छसि जीवन्तीं रक्षात्मानं ममासुभिः ॥ ६५ ॥

'म्रियत इति' या तव माता त्वयि शङ्खचूडे म्रियमाणे म्रियते। त्वयि जीवति (शत्रन्तम्) अम्रियमाणे जीवति प्राणिति, तां स्वमातरं यदि जीवन्तीम् इच्छसि तर्हि मम जीमूतवाहनस्य असुभिः प्राणैः आत्मानं रक्ष ॥ ६५ ॥

अयमभ्युपायः तदर्पय त्वरितं वध्यचिह्नम्, यावदनेनात्मानं प्रच्छाद्य वध्यशिलामारोहामि, त्वमपि जननीं पुरस्कृत्य अस्माद्देशान्निवर्तस्व, कदाचिदम्बा आलोक्य घातस्थानं सन्निकृष्टं स्त्रीस्वभावकातरत्वेन जीवितं जह्यात्, किं न पश्यति भवानिदं विपन्नपन्नगानेककङ्कालसंकुलं महाश्मशानम् ?

पुरस्कृत्य अग्रतः कृत्वा। सन्निकृष्टं समीपस्थम्। विपन्नानां मृतानां पन्नगानाम् अनेकैः कङ्कालैः शरीरास्थिभिः, 'स्याच्छरीरास्थि कङ्कालः' इत्यमरः। सङ्कुलं व्याप्तम्।

तथा हि,

चञ्चच्चञ्चूप्रकृष्टच्युतपिशितलवग्राससंवृद्धगर्धै-
र्गृध्रैराबद्धपक्षद्वितयविधुतिभिर्बद्धसान्द्रान्धकारे।
वक्त्रोद्वान्ताः पतन्त्यः शमितशिखिशिखाश्रेणयोऽस्मिन् शिवानाम्
अस्रस्रोतस्यजस्रस्रुतिबहलवसावासविस्रे स्वनन्ति ॥ ६६ ॥

'चञ्चदिति'

खण्डान्वय —

अस्मिन् अस्रस्रोतसि (आधारे) शमितशिखिशिखाश्रेणयः (कर्त्र्यः) स्वनन्ति। कीदृशेऽस्रस्रोतसि ? गृध्रैः बद्धसान्द्रान्धकारे, कीदृशैः गृध्रैः ? चञ्चच्चञ्चूप्रकृष्टच्युतपिशितलवग्राससंवृद्धगर्धैः, पुनः कीदृशैः ? आबद्धपक्षद्वितयविधुतिभिः पुनः कीदृशेऽस्रस्रोतसि ? अजस्रस्रुतिबहलवसावासविस्रे, कीदृश्यः शमितशिखिशिखाश्रेणयः ? शिवानां वक्त्रोद्वान्ताः, किं कुर्वन्त्यः ? पतन्त्यः।

व्याख्या—

महाश्मशानं वर्णयति 'चञ्चदिति' चञ्चता चलता चञ्च्वोः अग्रेण तार्क्ष्यस्येति

शेषः । कृत्तं छिन्नं पुनः च्युतं भ्रष्टं यत् पिशितं मांसं तस्य लवग्रासे खण्डग्रासे संवृद्धा वृद्धिंगता गर्धा तृष्णा येषां तादृशैः, 'आबद्धेति' आबद्धा पक्षद्वितयस्य विधुतयः कम्पनानि यैस्तादृशैः गृध्रैः मृतजीवभक्षकैः पक्षिविशेषैः 'बद्धेति' बद्धं सान्द्रं घनम् अन्धकारं यत्र तादृशं, 'अजस्रेति' अजस्रा निरन्तरा सति निःसरणं यासां तादृशीनां वहलानां प्रभूतानां वसानां मेदसां 'मेदस्तु वपा वसे'त्यमरः । वासेन संयोगेन विस्रे आमगन्धिनि 'विस्रं स्यादामगन्धि य'दित्यमरः । एतादृशेऽस्रस्रोतसि रक्तप्रवाहे शिवानां शृगालीनां वक्त्रोद्वान्ता वक्त्रेभ्यो मुखेभ्य उद्वान्ता उद्गीर्णाः अतएव पतन्त्यः भ्रश्यन्त्यः 'शमितेति' शमिताः शान्तिंगताः शिखिनां वन्हीनां शिखाश्रेणयः शिखापङ्क्तयः स्वनन्ति शब्दायन्ते । स्वभावोक्तिः । अनुप्रासश्च । स्रग्धरावृत्तम् ॥ ६६ ॥

शङ्ख० । कथं न पश्यामि ? ।

प्रतिदिनमहिनाहारेण विनायकाहितप्रीति ।
शशिधवलास्थिकपालं वपुरिव रौद्रं श्मशानमिदम् ॥ ६७ ॥

'प्रतिदिनमिति' प्रतिदिनम् अहिना नागेन आहारेण भक्षणेन अन्यत्र हारेण माल्यस्वरूपेण अहिना सर्पेण उपलक्षितम्, 'विनायकेति' वीनां खगानां नायकस्य पत्युः अन्यत्र विनायकस्य गणपतेः आहिता उत्पन्ना प्रीतिर्यत्र तादृशम्, 'शशीति' शशीव चन्द्र इव धवलं शुभ्रम् अस्थ्येव कपालं यत्र अन्यत्र शशिना चन्द्रेण धवलम् अस्थि यस्य तादृशं कपालं यस्य तथोक्तम् इदं श्मशानं रौद्रं शिवसम्बन्धि वपुरिव शरीरमिव भातीति शेषः । श्लेषानुप्राणितोपमालंकारः ॥ ६७ ॥

नायकः । शङ्खचूड ! तद्गच्छ, किमेभिः सामोपन्यासैः ? ।

सामोपन्यासैः सान्त्ववचनैः ।

शङ्ख० । आसन्नः खलु गरुडस्यागमनसमयः । [ मातुरग्रतो जानुभ्यां स्थित्वा ] अम्ब ! त्वमपि निवर्तस्वेदानीम् ।

समुत्पत्स्यामहे मातर्यस्यां यस्यां गतौ वयम् ।
तस्यां तस्यां, प्रियसुते ! माता भूयास्त्वमेव नः ॥ ६८ ॥

'समुत्पत्स्यामह इति' हे मातः ! वयं यस्यां यस्यां गतौ योनौ समुत्पत्स्यामहे जनिष्यामहे, हे प्रियसुते ! प्रियः सुतो यस्य तादृशि प्रियपुत्रे ! तस्यां तस्यां गतौ त्वमेव नोऽस्माकं माता भूयाः ॥ ६८ ॥

[ पादयोः पतति ]

वृद्धा । [ सास्रम् ] कहं अपच्छिमवअणं पुत्तअ ! ण क्खु तुमं उज्झिअ मे पाआ अण्णदो वहन्ति, ता इह पव्व तुए सह चिट्ठिस्सं (क) ।

---

(क) कथमपश्चिमवचनं पुत्रक ! न खलु त्वाम् उज्झित्वा मे पादा अन्यतो वहन्ति, तदिहैव त्वया सह स्थास्यामि ।

अपश्चिमवचनम् नास्ति पश्चिमं यस्मात्तादृशं वचनम् अन्तिमवचनमित्यर्थः।

शङ्ख०। [ उत्थाय ] जवादहमपि अदूरे भगवन्तं दक्षिणगोकर्णं प्रदक्षिणीकृत्य स्वाम्यादेशमनुतिष्ठामि उभौ निष्क्रान्तौ।

जवाद् वेगाद् अतिशीघ्रमिति यावत्, दक्षिणगोकर्णं तदाख्यं तत्रस्थं शिवलिङ्गमित्यर्थः।

नायकः। [ दृष्ट्वा सहर्षमात्मगतम् ] दिष्ट्या सिद्धमभिवाञ्छितम् अनेन अतर्कितोपनतेन रक्तांशुकयुगलेन।

अतर्कितोपनतेन अकस्मादागतेन।

प्रविश्य।

कञ्चुकी। इदं वासोयुगं देव्या मित्रावसुजनन्या कुमाराय प्रेषितम्, तदेतत् परिधत्तां कुमारः।

नायकः। [ सादरम् ] उपनय।

कञ्चुकी। [ उपनयति ]

नायकः। [ गृहीत्वा आत्मगतम् ] सफलीभूतो मे मलयवत्याः पाणिग्रहः [ प्रकाशम् ] कञ्चुकिन्! गम्यतां, मद्वचनादभिवादनीया देवी।

कञ्चुकी। यदाज्ञापयति कुमारः। [ इति निष्क्रान्तः ]

नायकः। वासोयुगमिदं रक्तं प्राप्ते काले समागतम्।
महतीं प्रीतिमाधत्ते परार्थे देहमुज्झतः॥ ६९॥

'वासोयुगमिति'। इदं रक्तं लोहितवर्णं वासोयुगं वस्त्रद्वयं प्राप्ते उपयुक्तकालेऽवसरे समागतं सम्प्राप्तं सत् अन्यनिमित्तं देहं शरीरम् उज्झतः त्यजतो मम महतीं प्रीतिम् आधत्ते समुत्पादयति। काव्यलिङ्गम्॥ ६९॥

[दिशोऽवलोक्य] यथायं चलितमलयाचलशिलासञ्चयः प्रचण्डो नभस्वान् तथा तर्कयामि आसन्नीभूतः खलु पक्षिराज इति। तथाहि,

चलितेति। चालितः स्वस्थानात् च्युतो मलयाचलस्य शिलासञ्चयः प्रस्तरसमुदायो येन तादृशः प्रचण्डः वेगवान् नभस्वान् वायुः। आसन्नीभूतः समीपागतः

तुल्याः संवर्त्तकाभ्रैः पिदधति गगनं पङ्क्तयः पक्षतीनां
तीरे वेगानिलोऽम्भः क्षिपति भुव इव प्लावनायाम्बुराशेः।
कुर्वन् कल्पान्तशङ्कां सपदि च सभयं वीक्षितो दिग्द्विपेन्द्रैः
देहोद्योतैर्दशाशाः कपिशयति मुहुर्द्वादशादित्यदीप्तिः॥ ७०॥

गरुडागमनं वर्णयति 'तुल्या इति'। संवर्त्तस्य प्रलयकालस्य अभ्रैः मेघैः 'संवर्तः प्रलयः कल्पः' इत्यमरः। तुल्याः सदृशाः पक्षतीनां पक्षसमूहानां पङ्क्तयः श्रेणयः गगनम् आकाशं पिदधति आच्छादयन्ति। वेगानिलः वेगवायुः

भुवः पृथिव्याः प्लावनाय इव अवगाहनाय इव अम्बुराशेः समुद्रस्य तीरे अम्भो जलं क्षिपति प्रेरयति । कल्पान्तशङ्का प्रलयशङ्का कुर्वन् अतएव दिग्द्विपेन्द्रै दिग्गजै सपदि शीघ्रमेव सभयं सत्रासं यथास्यात्तथा वीक्षितो दृष्टः द्वादशादित्यदीप्ति द्वादशसूर्यकान्तिः गरुडश्च देहोद्योतैः शरीरप्रभाभिः दशाशा दशदिशः मुहुः पुनः पुनः कपिशयति पिंगलयति । अत्रोत्प्रेक्षाभ्रान्तिमदुपमालङ्काराणां संसृष्टिः ॥ ७० ॥

तद् यावदसौ नागच्छेत् शङ्खचूडः तावत् त्वरिततरमिमां वध्यशिलामारोहामि । [ तथा कृत्वा उपविश्य स्पर्शं नाटयति ] अहो स्पर्शोऽस्याः ।

न तथा सुखयति मनो मलयवतीमलयचन्दनरसार्द्रा ।<br>
अभिवाञ्छितार्थसिद्ध्यै वध्यशिलेयं यथाश्लिष्टा ॥ ७१॥

'न तथेति'। तथा मलयचन्दनस्य रसेन आर्द्रा स्निग्धा मलयवती तदाख्या मत्कान्ता । आश्लिष्टा आलिङ्गिता सती मनो न सुखयति आनन्दयति यथा अभिवाञ्छितार्थसिद्ध्यै मनोरथसिद्धये आश्लिष्टा इयं वध्यशिला सुखयति । व्यतिरेकालङ्कारः ॥ ७१ ॥

अथवा किं मलयवत्या ?—

शयितेन मातुरङ्के विश्रब्धं शैशवे न तत् प्राप्तम् ।<br>
लब्धं सुखं मयास्या वध्यशिलाया यदुत्सङ्गे ॥७२॥

'शयितेनेति'। मातुर्जनन्या अङ्के क्रोडे विश्रब्धं निश्चिन्तं शयितेन सुप्तेन मया शैशवे बाल्येऽपि तत् सुखं न प्राप्तं यत्सुखं अस्या वध्यशिलायाः उत्सङ्गे अङ्के लब्धं प्राप्तम् ॥ ७२ ॥ व्यतिरेकालङ्कारः ।

तदयमागतो गरुत्मान्, यावदात्मानमाच्छादयामि । [ तथा करोति ] ।

( ततः प्रविशति गरुडः )

गरुडः ।

दृष्ट्वा बिम्बं हिमांशोर्भयकृतवलयां संस्मरन् शेषमूर्त्तिं<br>
सानन्दं स्यन्दनाश्वत्रसनविचलिते पूष्णि दृष्टोऽग्रजेन ।<br>
एष प्रान्तावसज्जज्जलधरपटलैरायतीभूतपक्षः ।<br>
प्राप्तो वेलामहीध्रं मलयमहमहिग्रासगृध्नुः क्षणेन ॥ ७३ ॥

खण्डान्वयः—

'दृष्ट्वेति'।

एषोऽहं क्षणेन मलयं प्राप्तः किं कुर्वन् ? शेषमूर्त्तिं स्मरन्, कीदृशीं शेषमूर्त्तिम् ? भयकृतवलयाम्, किं कृत्वा हिमांशोः बिम्बं दृष्ट्वा, कीदृशोऽहम् ? सानन्दम् अग्रजेन दृष्टः, किं सति ? पूष्णि स्यन्दनाश्वत्रसनविचलिते सति, पुनः

कीदृशोऽहम्? आयतीभूतपक्षः, कैः? प्राप्तावसज्जज्जलधरपटलैः, पुनः कीदृश? अहिग्रासगृध्नुः, कीदृशं मलयम्? वेलामहीध्रम्।

व्याख्या—

मलयागमने स्वस्य मार्गवृत्तमाह, 'दृष्ट्वेति'। हिमांशोः शशिनः बिम्बं मण्डलं दृष्ट्वा भयकृतवलया भयेन कृतं वलयं गोलाकारावस्थानं यया तादृशीं शेषमूर्तिं वासुकिमूर्तिं स्मरन्, पूष्णि सूर्ये स्यन्दनेति, स्यन्दनस्य रथस्य अश्वानां वाजिनां त्रसनेन विचलिते कथं ममाश्वाः संत्रस्ता इति चकिते सति अग्रजेन ज्येष्ठभ्रात्रा अरुणेन सानन्दं सहर्षं दृष्टः, तथा प्राप्तेति, प्राप्तैः पथि मिलितैः अतएव अवसज्जद्भिः इतस्ततश्चलद्भिः जलधरपटलैः मेघनिचयैः आयतीभूता विस्तृतीभूता पक्षा यस्य तादृशः अहिग्रासगृध्नुः अहेः सर्पस्य ग्रासे भक्षणे गृध्नुः लुब्धः, तादृश एषोऽहं गरुडः क्षणेन वेलामहीध्रं समुद्रतटपर्वतं मलयं प्राप्तोऽस्मि। अत्र गोलाकारत्वात् श्वेतवर्णत्वाच्च चन्द्रबिम्बदर्शनेन शेषमूर्त्याः स्मरणात् स्मरणालंकारः। 'सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते' इति दर्पणोक्तेः। स्रग्धरावृत्तम्।

नायकः। [सपरितोषम्]

संरक्षता पन्नगमद्य पुण्यं मयार्जितं यत् स्वशरीरदानात्।
भवे भवे तेन ममैव भूयात् परार्थहेतोः खलु देहलाभः॥ ७४॥

गरुडागतौ जीमूतवाहनः सर्वजन्मसु देहसाफल्यमेवमेव याचते 'संरक्षतेति'। अद्य अस्मिन् दिने स्वशरीरदानात् पन्नगं नागं संरक्षता सम्पालयता मया यत् पुण्यं सुकृतम् अर्जितम् एकत्रीकृतम्, तेन कारणभूतेन पुण्येन मम भवे जन्मनि जन्मनि परार्थहेतोः अन्यरक्षार्थमेव खलु देहलाभः शरीरप्राप्तिः भूयात् स्यात्। उपजातिवृत्तम्। काव्यलिङ्गालंकारः॥ ७४॥

गरुडः। [नायकं निर्वर्ण्य]

अस्मिन् वध्यशिलातले निपतितं शेषानहीन् रक्षितुं
निर्भिद्याशनिचण्डचण्डतरया चञ्च्वाधुना वक्षसि।
भोक्तुं भोगिनमुद्धरामि तरसा रक्ताम्बरप्रावृतं
दिग्धं मद्भयदीर्यमाणहृदयप्रस्यन्दिनेवासृजा॥ ७५॥

खण्डान्वयः—

'अस्मिन्निति'

अधुना अहं भोगिनम् तरसा उद्धरामि, किं कर्तुम् भोक्तुम्, किं कृत्वा? चञ्च्वा वक्षसि निर्भिद्य, कीदृश्या चञ्च्वा? अशनिचण्डचण्डतरया, कीदृशं भोगिनम्? अस्मिन् वध्यशिलातले निपतितम्, किं कर्तुम्? शेषान् अहीन् रक्षितुम्, पुनः कीदृशं भोगिनम्? रक्ताम्बरप्रावृतम्, कीदृशमिव? असृजा दिग्धमिव, कीदृशास्सृजा? मद्भयदीर्यमाणहृदयप्रस्यन्दिना।

व्याख्या—

'अस्मिन्निति' अहम् अस्मिन् वध्यशिलातले शेषान् अन्यान् अहीन् नागान् रक्षितुं निपतितम्, तथा मद्भयेति । मत्तो मद्भय तेन दीर्यमाणाद् भिद्यमानात् हृदयात् प्रस्यन्दिना प्रस्रवणशीलेन असृजा रुधिरेण दिग्धं लिप्तमिव रक्ताम्बरप्रावृत रक्तवस्त्राच्छादितं भोगिनं नागम् अधुना इदानीम् अशनिवत् वज्रात् चण्डचण्डतरया अतिभीषणया चञ्च्वा वक्षसि उरसि निर्भिद्य निष्पीड्य भोक्तुं भक्षितुं तरसा वेगेन उद्धरामि उत्थापयामि । अत्र रक्तवस्त्राच्छादितत्वस्य रुधिर दिग्धत्वेन सम्भावनादुत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ७५ ॥

[इत्यभिपत्य नायकं गृह्णाति, नेपथ्ये पुष्पाणि पतन्ति, दुन्दुभयश्च स्वनन्ति]

गरुडः । [सविस्मयम्] अये !

आमोदानन्दितालिर्निपतति किमियं पुष्पवृष्टिर्नभस्तः

स्वर्गे किं वैष चक्रं मुखरयति दिशां दुन्दुभीनां निनादः ।

विहस्य । ]

आः ज्ञातं सोऽपि मन्ये मम जवमरुता कम्पितः पारिजातः

सर्वैः संवर्त्तकाभ्रैरिदमपि रणितं जातसंहारशङ्कैः ॥ ७६ ॥

पुष्पवर्षणादिना साश्चर्यमाह 'आमोदेति' । आमोदेन अतिनिर्हारिणा गन्धेन 'आमोदः सोऽतिनिर्हारी' त्यमरः । आनन्दिता हृष्टा अलयो भ्रमरा यया तादृशी इयं पुष्पवृष्टिः नभस्तः आकाशात् किं निपतति ? अथवा एष दुन्दुभीनां भेरीणां निनादो ध्वनिः स्वर्गे दिशां चक्रं मण्डलं किं मुखरयति मुखरीकरोति, पुनर्विहस्याह आः इति, आः स्मरणे ज्ञातम् उपलब्धं मयेतिशेषः, किं ज्ञातमित्याह मम गरुडस्य जवमरुता वेगवायुना स पारिजातः देववृक्षोऽपि कम्पित, इदमपि जातसंहारशङ्कैः उत्पन्नप्रलयभ्रान्तिभिः सर्वैः संवर्त्तकाभ्रैः प्रलयजलधरैः रणितं गर्जितम् मन्ये सम्भावयामि । अत्रापि पुष्पवृष्टेः पारिजातकम्पनेन दुन्दुभिनादस्य च संवर्त्तकाभ्ररणितेन सम्भावनादुत्प्रेक्षालंकारः । स्रग्धरावृत्तम् ॥ ७६ ॥

नायकः । [आत्मगतम्] दिष्ट्या कृतार्थोऽस्मि ।

गरुड । [नायकं कलयन्] ।

नागानां रक्षिता भाति गुरुरेषु यथा मम ।

तथा सर्पाशनाकांक्षां व्यक्तमद्यापनेष्यति ॥ ७७ ॥

'नागानामिति' । यथा पुरुषेषु मनुष्यलोकमध्य इत्यर्थः, नागानाम् अशिष्टसर्पाणां रक्षिता रक्षको भाति शोभते । तथा व्यक्तं स्पष्टम् अवश्यमित्यर्थ, अद्य मम सर्पाशनाकांक्षा नागभक्षणेच्छाम् अपनेष्यति दूरीकरिष्यति ।' शोणितस्य नागस्य भोजनेच्छानिवारणे हेतुत्वाभिधानात्काव्यलिङ्गालंकार ॥ ७७ ॥'

तद् यावदेनं गृहीत्वा मलयपर्वतमारुह्य यथेष्टमाहारयामि। [इति-निष्क्रान्तः]।

इति निष्क्रान्ताः सर्वे।

इति चतुर्थोऽङ्कः।

इति नागानन्दे सरस्वतीदधिमथीनामधेयाया टीकाया चतुर्थोऽङ्कः॥

## अथ पञ्चमोऽङ्कः।

[ततः प्रविशति प्रतीहारः]

प्रती०। स्वगृहोद्यानगतेऽपि स्निग्धे पापं विशङ्क्यते स्नेहात्।
किमु दृष्टबह्वपायप्रतिभयकान्तारमध्यस्थे॥ ७८॥

महाराजविश्वावसोश्चिन्तावस्था सूचयति "स्वगृहेति"। स्निग्धे प्रीतिपात्रे जने स्वगृहोद्यानगतेऽपि सति यदि स्नेहाद्धेतोः पापं विशङ्क्यते विशेषेण चिन्त्यते, पुनः तस्मिन्नेव दृष्टेति, दृष्टः बहु अपायो विनाशो यत्र तादृशं यत् प्रतिभयं भयंकरं 'भयंकरं प्रतिभय' मित्यमरः। काननं घोरवनं तस्य मध्यस्थे सति किमु वक्तव्यम्, पुनस्त्ववश्यमेव पापशङ्का प्रभवतीति भावः॥ अर्थापत्तिरलङ्कारः 'दण्डापूपिकयान्यायागमोऽर्थापत्तिरिष्यते' इति लक्षणात्॥ आर्यावृत्तम्॥ ७८॥

तथाहि—जीमूतवाहनो जलनिधिवेलावलोकनकुतूहली निष्क्रान्तश्चिरयतीति दुःखमास्ते महाराजविश्वावसुः। समादिष्टश्चास्मि तेन। यथा—सुनन्द! श्रुतं मया सन्निहितगरुडप्रतिभयमुद्देशं जामाता जीमूतवाहनो गत इति शङ्कित एवास्मि अनेन। तत् त्वरितं विज्ञायागच्छ किमसौ स्वगृहमागतो नवेति। यावत्तत्र गच्छामि। [परिक्रामन्नग्रे दृष्ट्वा।] अयमसौ राजर्षिर्जीमूतवाहनस्य पिता जीमूतकेतुरुटजाङ्गने सह स्वधर्मचारिण्या राजपुत्र्या च पर्युपास्यमानास्तिष्ठति। तथाहि।

उटजाङ्गने पत्रादिनिर्मितं मुनीनां गृहमुटजमित्युच्यते "मुनीनां तु पर्णशालोटजोऽस्त्रिया" मित्यमरः। तस्य अङ्गनेऽजिरे। पर्युपास्यमानः शुश्रूष्यमाणः।

क्षौमे भङ्गवती तरङ्गतरले फेनाम्बुतुल्ये वहन्
जाह्नव्येव विराजितः सुपयसा देव्या महापुण्यया।
धत्ते तोयनिधेरयं सुसदृशीं जीमूतकेतुः श्रियं
यस्यैपान्तिकवर्त्तिनी मलयवत्याभाति वेला यथा॥ ७९॥

"क्षौमे इति"

पदच्छेदः—

क्षौमे (२।२ शब्दन्तकर्म) भङ्गवती (२।२ शब्दन्तकर्मविशे.) तरङ्गतले (२।२ शब्दन्तकर्मवि.) फेनाम्बुतुल्ये (२।२ शब्दन्तकर्मवि) वहन् (१।१ शब्दन्तं

कर्तृवि. ) जाह्नव्या ( ३।१ करणोपमानम् ) इव ( अव्ययम् ) विराजितः ( १।१ कर्तृवि. ) सुपयसा (३।१ करणवि.) देव्या ( ३।१ करणम् ) महापुण्यया ( ३।१ करणवि. ) धत्ते ( क्रिया ) तोयनिधेः ( ६।१ ) अयम् ( १।१ कर्तृवि. ) सुसदृशीम् ( २।१ कर्मवि. ) जीमूतकेतुः ( १।१ कर्ता ) श्रियम् ( २।१ कर्म ) यस्य ( ६।१ ) एषा ( १।१ ) अन्तिकवर्तिनी ( १।१ ) मलयवती ( १।१ ) आभाति ( क्रिया ) वेला ( १।१ ) यथा ( अव्ययम् )।

व्याख्या—

जीमूतकेतोर्विभूतिं वर्णयति 'क्षौमेइति'। भङ्गवती भङ्गियुते तरङ्गतरले वीचिचपले फेनाम्बुतुल्ये फेनजलसदृशे क्षौमे क्षुमया अतस्या निर्मिते वस्त्रे 'अतसी स्यादुमा क्षुमे' त्यमरः। वहन् धारयन्, महापुण्यया अतिशुद्धया देव्या महिष्या सुपयसा स्वच्छजलया जाह्नव्या गङ्गयेव विराजितः, विशोभितः एतादृशोऽयं जीमूतकेतुः जीमूतवाहनपिता तोयनिधेः जलनिधेः सुसदृशीं सुतुल्यां श्रियं शोभां धत्ते धारयति, यस्य जीमूतकेतोः अन्तिकवर्तिनी समीपस्थायिनी एषा मलयवती जीमूतकेतुस्नुषा वेला यथा समुद्रतटीव 'वेला काले च जलधेस्तीरनीरविकारयो' रिति विश्वप्रकाशः। आभाति शोभते। उपमालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥७९॥

तद् यावदुपसर्पामि।

[ ततः प्रविशति पत्नीवधूसमेतो जीमूतकेतुः ]

जीमू०। भुक्तानि यौवनसुखानि यशोऽवकीर्णे
राज्ये स्थितं स्थिरधिया चरितं तपोऽपि।
श्लाघ्यः सुतः सुसदृशान्वयजा स्नुषेयं
चिन्त्यो मया ननु कृतार्थतयाद्य मृत्युः ॥ ८० ॥

निजकृतार्थतां वर्णयति 'भुक्तानीति'। मया यौवनसुखानि भुक्तानि अनुभूतानि, यशसाऽवकीर्णे व्याप्ते राज्ये स्थितम्, स्थिरधिया निश्चलबुद्ध्या तपोऽपि चरितं कृतम्, सुतः पुत्रो जीमूतवाहनः श्लाघ्यः प्रशंसनीयः, इयं स्नुषा मलयवती सुसदृशान्वयजा सुतुल्यकुलोत्पन्ना, अतः अद्य सम्प्रति मया कृतार्थतया सफलजन्मतया ननु निश्चितं मृत्युर्मरणं, चिन्त्यः शोच्यः। अत्र पूर्ववाक्यानां मृत्युचिन्तने हेतुत्वाभिधानात् काव्यलिङ्गालङ्कारः। 'हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते' इति लक्षणात्। वसन्ततिलकं वृत्तम् ॥ ८० ॥

सुनन्दः। [ सहसोपसृत्य ] जीमूतवाहनस्य।

जीमू०। [ कर्णौ पिधाय ] शान्तं पापम्।

वृद्धा। पडिहदं क्खु एदं अमङ्गलं ( क )।

( क ) प्रतिहतं खल्वेतदमङ्गलम्।

मलयवती। वेवदि मे हिअअं इमिणा दुण्णिमित्तेण (क)।

जीमू०। [वामाक्षिस्पन्दनं सूचयित्वा] भद्र! किं जीमूतवाहनस्य।

वामाक्षिस्पन्दनं वामनेत्रस्फुरणम्।

सुनन्दः। जीमूतवाहनस्य वार्त्तामन्वेष्टुं महाराजविश्वावसुना युष्मदन्तिकं प्रेषितोऽस्मि।

जीमू०। किमसन्निहितस्तत्र मे वत्सः।

असन्निहितः अपार्श्वस्थः।

वृद्धा। [सविषादम्] महाराअ! जइ तर्हिं ण सण्णिहिदो ता कर्हिं गदो मे पुत्तओ भविस्सदि (ख)।

जीमू०। नूनमस्मत्प्राणरक्षार्थं गतो भविष्यति।

अस्मत्प्राणरक्षार्थम् अस्माकं जीविकाऽन्वेषणार्थम्।

मल०। [सविषादमात्मगतम्] अहं उण अज्जउत्तं अपेक्खन्ती अण्णं एव्व किम्पि आसङ्कामि (ग)।

सुनन्दः। आज्ञापय। किं मया स्वामिनो निवेदनीयम्।

जीमू०। [वामाक्षिस्पन्दनं सूचयित्वा] जीमूतवाहनश्चिरयतीति पर्य्याकुलोऽस्मि हृदयेन।

स्फुरसि किमु दक्षिणेतर! मुहुर्मुहुः सूचयन्ममानिष्टम्।
हतचक्षुरपहतं ते स्फुरितमिहायं करिष्यते भानुः॥ ८१॥

'स्फुरसीति'। हे दक्षिणेतर वामनेत्र! मम अनिष्टम् अशकुनं सूचयत् प्रकटयत् मुहुर्मुहुः पुनः पुनः किमर्थं स्फुरसि स्पन्दसे? हे हतचक्षुः दुष्टनेत्र! इह अस्मिन् विषये अयं भानुः सूर्यः ते तव स्फुरितं स्पन्दितम् अपहतं विनष्टं करिष्यते। वामाङ्गस्फुरणदोषः सूर्यदर्शनाद् विनश्यतीति शकुनशास्त्रोक्तेः। अनुप्रासालङ्कारः। आर्यावृत्तम्॥ ८१॥

[ऊर्ध्वमवलोक्य] अयमेव त्रिभुवनैकचक्षुर्भगवान् सहस्रदीधितिः स्फुटं जीमूतवाहनस्य श्रेयः करिष्यति।

[विलोक्य सविस्मयम्]।

आलोक्यमानमतिलोचनदुःखदायि
रक्तच्छटा निजमरीचिरुचो विमुञ्चत्।

(क) वेपते मे हृदयमनेन दुर्निमित्तेन।

(ख) यदि तत्र न सन्निहितस्तत् क्व गतो मे पुत्रको भविष्यति।

(ग) अहं पुनरार्य्यपुत्रमप्रेक्षमाणा अन्यदेव किमपि आशङ्के।

उत्पातवाततरलीकृततारकाभम्
एतत्पुरः पतति किं सहसा नभस्तः ॥ ८२ ॥

आकाशात्पतन्तं रुधिरलिप्तं जीमूतवाहनस्य चूडामणिं दृष्ट्वाऽऽशङ्कते 'आलोक्यमानमिति'। आलोक्यमानं दृश्यमानम् अतिलोचनदुःखदायि नेत्रयोः अति दुःखप्रदम्, निजमरीचिरुचः स्वकिरणाभा रक्तच्छटा रुधिरधारा विमुञ्चत् त्यजत्, उत्पातेति, उत्पातस्य दुर्निमित्तसूचकस्य वातेन वायुना तरलीकृताश्चपलीकृताः तारकाणां नक्षत्राणाम् आभाः कान्तयो येन तादृशम् एतत् किं द्रव्यं नभस्तः आकाशात् सहसा युगपत् पुरोऽग्रतः पतति भ्रश्यति । उपमालङ्कारः । वसन्ततिलकं वृत्तम् ॥ ८२ ॥

कथं चरणयोरेव पतितम् । [ सर्वे निरूपयन्ति ] ।

जीमू० । अये ! कथं लग्नसरसमांसश्चूडामणिः । कस्य पुनरयं स्यात् ?

लग्नेति, लग्नं सरसं स्निग्धं रुधिरयुक्तमित्यर्थः मांसं यस्मिन् । चूडामणिः शिरोरत्नम् ।

वृद्धा । [ सविषादम् ] महाराअ ! पुत्तअस्स विअ मे एदं चूडारअणं (क)।

मल० । अम्ब ! मा एव्वं भण (ख)।

सुनन्दः । महाराज ! मैवमविज्ञाय विक्लवी भू । अत्र हि तार्क्ष्येण भक्ष्यमाणानां नागाधिपानामनेके नखमुखोत्खाताः पतन्त्येते शिरोमणयः ।

मा विक्लवी भू व्याकुलीभव । नखमुखैः नखाग्रैः उत्खाता उत्पाटिता ।

जीमू० । देवि ! सोपपत्तिकमभिहितम् कदाचिदेवमपि स्यात् ।

वृद्धा । सुणन्दअ ! जाव इमाए वेलाए ससुरसदणं एव्व आगदो मे पुत्तको भविस्सदि । ता गच्छ जाणिअ लहु सम्पादेहि (ग)।

सुनन्दः । यदाज्ञापयति देवी । [ इति निष्क्रान्तः ] ।

जीमू० । देवि ! अपि नागचूडामणिः स्यात् ।

[ ततः प्रविशति रक्ताम्बरसंवीतः शङ्खचूडः ]

शङ्ख० । [ सास्रम् ]

गोकर्णमर्णवतटे त्वरितं प्रणम्य
प्राप्तोऽस्मि तां खलु भुजङ्गमवध्यभूमिम् ।

---

(क) महाराज ! पुत्रकस्येव मे एतच्चूडारत्नम् ।

(ख) अम्ब ! मैवं भण ।

(ग) सुनन्दक ! यावदनया वेलया श्वशुरसदनमेवागतो मे पुत्रको भविष्यति । तद्गच्छ ज्ञात्वा लघु सम्पादय ।

आदाय तं नखमुखक्षतवक्षसञ्च
विद्याधरं गगनमुत्पतितो गरुत्मान् ॥ ८३ ॥

'गोकर्णमिति'। अहम् अर्णवतटे समुद्रकूले गोकर्णं तदाख्यं शिवलिङ्गं प्रणम्य नमस्कृत्य तां भुजङ्गमवध्यभूमिं भुजङ्गमानां नागानां वध्यभूमिं वध्यस्थानं त्वरितं शीघ्रं प्राप्तोऽस्मि आगतोऽस्मि खलु। गरुत्मान् गरुडश्च, नखेति, नखमुखैः नखाग्रैः क्षत वक्षो यस्य तादृशं तं विद्याधरं जीमूतवाहनम् आदाय नीत्वा गगनम् आकाशम् उत्पतितः उड्डयितः। अत्र प्राप्त्युत्पतनयोः द्वयोः क्रिययोर्यौगपद्येनाभिधानात्समुच्चयालङ्कारः। लक्षणमुक्तं प्राक्। अनुप्रासालंकारश्च। वसन्ततिलकंवृत्तम्।

[रुदन्] हा महासत्त्व! हा परमकारुणिक! हा निष्कारणैकबान्धव! हा परदुःखदुःखित! क्व गतोऽसि प्रयच्छ मे प्रतिवचनम्। हा शङ्खचूडहतक! किं कृतं त्वया?

नाहित्राणा कीर्त्तिरेकाहमाप्ता
नापि श्लाघ्या स्वमिनोऽनुष्ठिताज्ञा।
दत्त्वात्मानं रक्षितोऽन्येन शोच्यो
हा धिक्! कष्टं! वञ्चितो वञ्चितोऽसि ॥ ८४ ॥

आत्मानं निन्दयति 'नाहित्राणेति'। हे शङ्खचूडहतक! त्वया एकाहम् ऐकस्मिन्नपि दिने अहित्राणा नागरक्षणा कीर्तिः यशः न आप्ता प्राप्ता। श्लाघ्या प्रशसनीया स्वामिन शेषनागस्य आज्ञाऽपि न अनुष्ठिता कृता, त्वया ऽद्य गरुडाय सर्वनागरक्षणाय आत्मा देय इति प्रभाराज्ञाऽपि नमतेति भावः। एतदनन्तरम् अन्येन परेण आत्मानं दत्त्वा रक्षितोऽसि, अतएव शोच्य शोचितुं योग्यः, हा धिक् त्वाम्, कष्टम्, वञ्चितोऽसि वञ्चितोऽसि अतिशयेन वञ्चितोऽसि छलितोऽसि। अत्र पूर्ववाक्यानां शोच्यत्वे हेतुत्वात्काव्यलिङ्गम्। आरब्धस्य नागरक्षणयशसो वैफल्यात् परात्मदानेन स्वरक्षणरूपस्यानिष्टस्य च सम्भवाद् विषमालंकारः। तदुक्तं दर्पणे 'गुणौ क्रिये वा यत्स्यातां विरुद्धे हेतुकार्ययोः। यद्वाऽऽरब्धस्य वैफल्यमनर्थस्य च सम्भव। विरूपयो सङ्घटना या च तद्विषमं मतम्' इति। एकस्य कर्तृत्वेऽनेकासां क्रियाणां च सम्भवात्कारकदीपकालंकारश्च। शालिनीवृत्तम् 'शालिन्युक्ता म्तौ तगौ गोऽब्धिलोकैः' इति लक्षणात् ॥ ८४ ॥

तदात्मेवंविधः क्षणमपि जीवन्नुपहास्यमात्मानं करोमि। यावदेतदनुगमनं प्रति यतिष्ये। [परिक्रामन् भूमौ दत्तदृष्टिः]।

आदावत्पीडपृथ्वीं प्रविरलपतितस्थूलबिन्दुं ततोऽग्रे
ग्रावस्वायामशीर्णप्रसृततनुकणां कीटकीर्णां स्थलीषु।
दुर्लक्ष्यां धातुभिन्ने घनतरुशिखरे स्त्याननीलस्वरूपाम्
एनां तार्क्ष्यं दिदृक्षुर्निपुणमनुसरन् रक्तधारां व्रजामि ॥ ८५ ॥

जीमूतवाहनात्पतितां रुधिरधारां यथावस्थां वर्णयति 'आदाविति'। तार्क्ष्यं गरुत्मन्तं दिदृक्षुः- द्रष्टुमिच्छुः दृशेः सन्नन्तात् 'सनाशंसभिक्ष उः' इत्यु॰ प्रत्ययः। अहम् आदौ प्रथमे उत्पीडपृथ्वीम् उत्पीडनेन निष्पीडनेन पृथ्वीं गुर्वीं गाढामिति यावत्। ततः तस्माद् अग्रे प्रविरलाः क्वचित् क्वचित् पतिताः स्थूलाः बिन्दवो यस्यास्तादृशीम्, ग्रावसु पाषाणेषु आयामेति आयामेन विस्तरेण शीर्णा. चूर्णिता अतएव प्रसृता इतस्ततो विक्षिप्ताः तनुकणाः सूक्ष्मबिन्दवो यस्यास्तथोक्तम्, तथा स्थलीषु अकृत्रिमभूमिषु कीटकीर्णां कीटैः पिपीलिकादिभिः क्षुद्रजीवैः कीर्णां व्याप्ताम् धातुभिन्ने धातुना गैरिकादिना भिन्ने सम्भरिते प्रदेशे दुर्लक्ष्या दुःखेन लक्षितुं प्रत्येतुं शक्यां तुल्यवर्णत्वादित्यर्थः. घनानां सान्द्राणां तरूणां वृक्षाणां शिरसि शिखरेष्वि- त्यर्थः 'जातावेकवचनम्'। श्यामेति, श्यामं वर्धितं नीलं कृष्णं स्वरूपं यस्याः तादृशीम् पत्राणां नीलवर्णत्वादित्यर्थः.' एतादृशीम् एनां रक्तधारां रुधिरपंक्तिम् अनुसरन् अनुगच्छन् व्रजामि गच्छामि। अत्रैकस्या धाराया ग्रावादावनेकत्र भव- नात् पर्यायालंकारः। तदुक्तं साहित्ये 'क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात्। भवति क्रियते वा चेत्तदा पर्याय इष्यते' इति। स्रग्धरावृत्तम् ॥ ८५ ॥

वृद्धा। [ससाध्वसम्] महाराअ ! एसो ससोओ विअ अरु- णवअणो इदो एव्व तुरिदं आअच्छन्तो हिअअं मे आकुलीकरेदि। ता जाणीअदु दाव को एसोत्ति (क)।

जीमू॰। यथाह देवी। [आकर्ण्य सहर्षं विहस्य] देवि ! मुञ्च शोकम्। अस्यायं चूडामणिर्नूनं मांसलोभात् केनापि पक्षिणा मस्त- कादुत्खाय आनीयमानोऽस्यां भूमौ पपात।

वृद्धा। [सपरितोषम्—मलयवतीं समालिङ्ग्य] अविधवे ! धीरा होहि। ण क्खु ईदिसी आकिदी वेहव्वदुक्खं अणुहोदि (ख)।

मल॰। [सहर्षम्] अम्ब ! तुम्हाणं आसिसा पसाएण (ग)। [पादयोः पतति]।

जीमू॰। वत्स ! कथमिव।

शङ्ख॰। दुःखातिभाराद् बाष्पोपरुद्धकण्ठो न शक्नोमि कथयितुम्।

जीमू॰। आवेदय ममात्मीयं पुत्रदुःखं सुदुःसहम्।
संक्रान्तमस्ति हृदये येन सह्यं भविष्यति ॥ ८६ ॥

'आवेदयेति'। हे वत्स ! आत्मीयं स्वकीयं वृत्तम् आवेदय कथय, सुदु यद्

---

(क) महाराज ! एष सशोक इव अरुणवदन इत एव त्वरितमागच्छन् हृदयं मे आकुलीकरोति। तत् ज्ञायतां तावत् क एष इति।

(ख) अविधवे ! धीरा भव। खल्वीदृशी आकृतिर्वैधव्यदुःखमनुभवति।

(ग) अम्ब ! युष्माकमाशिषा प्रसादेन।

सोढुमशक्यं पुत्रदुःखं मम हृदये सङ्क्रान्तं व्याप्तमस्ति येन तव निवेदनेन सह्यं सोढुं शक्यं भविष्यति ॥ ८६ ॥

शङ्ख० । श्रूयताम् । शङ्खचूडो नाम नागः खल्वहम् आहारार्थं वासुकिना वैनतेयाय प्रेषितः । किं वा विस्तरेण । कदाचिदियं रुधिरधारापद्धतिः पांशुभिरवकीर्य्यमाणा दुर्लक्ष्यतामुपयाति तत् संक्षेपतः कथयामि ।

रुधिरधारायाः पद्धतिः चिह्नमित्यर्थः । पांशुभिः धूलिभिः । अवकीर्यमाणा व्याप्यमाना ।

विद्याधरेण केनापि करुणाविष्टचेतसा ।
मम संरक्षिताः प्राणा दत्त्वात्मानं गरुत्मते ॥ ८७ ॥

'विद्याधरेणेति' । करुणाविष्टचेतसा दयाव्याप्तमनसा केनापि अज्ञातनामधेयेन विद्याधरेण गरुत्मते गरुडाय आत्मानं स्वशरीरं दत्त्वा समर्प्य मम प्राणा असवः संरक्षिताः ॥ ८७ ॥

जीमू० । कोऽन्य एवं परहितव्यसनी वत्स ! ननु स्पष्टमेवोच्यतां जीमूतवाहनेनेति । हा हतोऽस्मि ! मन्दभाग्यः ।

परहितव्यसनी परोपकाररतः ।

वृद्धा । हा पुत्तक ! कहं तुए एदं किदं (क) ।

मल० । कहं सच्चीभूदं एव्व दुच्चिन्तिदं (ख) । [ सर्वे मोहं गच्छन्ति ] ।

शङ्ख० । [ सास्रम् ] नूनमेतौ पितरौ तस्य महासत्त्वस्य । कथमप्रियवादिना मया इमामवस्थां नीतौ । अथवा विषादृते विषधरस्य मुखात् किमन्यन्निःसरति । अहो ! प्राणप्रदस्य सुसदृशं प्रत्युपकृतं जीमूतवाहनस्य शङ्खचूडेन । तत् किमधुनैवात्मानं व्यापादयामि । अथवा समाश्वासयामि तावदेतौ । तात ! समाश्वसिहि । अम्ब समाश्वसितु । ( उभौ समाश्वसितः ) ।

वृद्धा । वच्छे ! उट्ठेहि मा रोअ । अम्हे किं जीमूतवाहणेण विणा जीवम्ह । ता समस्सस दाव (ग) ।

मल० । [समाश्वस्य] अज्जउत्त ! कहिं मए तुमं पेक्खिदव्वो (घ) ।

---

(क) हा पुत्रक ! कथं त्वयैतत् कृतम् ।

(ख) कथं सत्यीभूतमेव दुश्चिन्तितम् ।

(ग) वत्से ! उत्तिष्ठ । मा रुदिहि । वयं किं जीमूतवाहनेन विना जीवामः । तत् समाश्वसिहि तावत् ।

(घ) आर्यपुत्र ! क्व मया त्वं प्रेक्षितव्यः ।

जीमू०। हा वत्स ! गुरुचरणशुश्रूषाविधिज्ञ !

'गुर्वीति' गुरूणां चरणानां या शुश्रूषा उपासना 'शुश्रूषाऽप्युपासने' त्यमर. तस्या विधिं विधानं जानाति तादृश !

चूडामणिं चरणयोर्मम पातयता त्वया।
लोकान्तरगतेनापि नोज्झितो विनयक्रमः॥ ८८॥

'चूडामणिमिति'। मम जीमूतकेतोः चरणयोः चूडामणिं शिरोरत्नं पातयता निक्षिपता लोकान्तरगतेनापि अन्यलोकगतेनापि त्वया जीमूतवाहनेन विनयक्रम शिष्टाचारप्रणाली न उज्झितः त्यक्त ॥ ८८॥

[ चूडामणिं गृहीत्वा। ] हा वत्स ! कथमेतावन्मात्रदर्शनः संवृत्तोऽसि। [ हृदये दत्त्वा ] अहह !!!

भक्त्या सुदूरमवनामितनम्रमौलेः शश्वत्तव प्रणमतश्चरणौ मदीयौ।
चूडामणिर्निकषणैर्मसृणोऽप्यहिंस्रो गाढं विदारयति मे हृदयं कथन्नु॥

'भक्त्येति' भक्त्या श्रद्धया सुदूरम् अत्यन्तम् अवनामितः नम्रीकृतः नम्रस्वभावनम्रो मौलिर्मस्तकं येन तादृशस्य, शश्वत् सततं मदीयौ मत्सम्बन्धिनौ चरणौ पादौ प्रणमतः नमस्कुर्वतः तव चूडामणिः निकषणैः घर्षणैः मसृणः स्निग्धोऽपि अहिंस्रः अक्रूर. सन् मे हृदयं कथं नु गाढं विदारयति विशीर्णयति अत्र चूडामणेः कोमलत्वेऽपि हृदयविदारणाद्विभावनालंकारः 'विभावना विना हेतुं कार्योत्पत्तिर्यदुच्यते' इति दर्पणोक्तेः। अथवाऽहिंस्रत्वस्य विदारणरूपक्रियया विरोधाभासत्वाद् विरोधालङ्कारः। वसन्ततिलकं वृत्तम् ॥ ८९॥

वृद्धा। हा पुत्त जीमूदवाहण ! जस्स दे गुरुजणसुस्सूसं वज्जिअ अण्णं सुहं ण रोअदि। सो कहिं दाणिं पिदरं उज्झिअ सग्गसुहमणुहोदुं गदोसि (क)।

जीमू०। [ सास्रम् ] देवि ! किं जीमूतवाहनेन विना जीवामो वयं येनैवं प्रलपसि ?

मल०। [ पादयोर्निपत्य कृताञ्जलिः ] ता देहि मे अज्जउत्तचिह्नं चूडामणिं जेण पदं हिअए कदुअ जलणप्पवेसेण अवणेमि हिअअस्स सन्दावदुक्खं (ख)।

जीमू०। पतिव्रते ! किमेवमाकुलयसि। ननु सर्वेषामेवास्माकमयं निश्चयः।

---

(क) हा पुत्र ! जीमूतवाहन। यस्य ते गुरुजनशुश्रूषां वर्जयित्वा अन्यत् सुखं न रोचते। स कथमिदानीं पितरमुज्झित्वा स्वर्गसुखमनुभवितुं गतोऽसि।

(ख) तद्देहि मे आर्यपुत्रचिह्नं चूडामणिं येनैनं हृदये कृत्वा ज्वलनप्रवेशेन अपनयामि हृदयस्य सन्तापदुःखम्।

वृद्धा। महाराअ! ता किं अम्हे हिं पडिपालीअदि (क)।

जीमू०। न खलु देदि! किञ्चित्। किन्त्वाहिताग्नेर्नान्येनाग्निना संस्कारो विहितः। अतोऽग्निहोत्रशरणादग्नीनादायात्मानमुद्दीपयामः।

आहिताग्नेः आहितः स्थापितोऽग्निर्येन तादृशस्य अग्निहोत्रिणः पुरुषस्य। संस्कारः शरीरदाहादिः।

शङ्ख०। [आत्मगतम्] कष्टं ममैकस्य कृते सकलमेवेदं विद्याधरकुलमुच्छिन्नम्। तदेवं तावत्। [प्रकाशम्] तात! न खल्वनिश्चित्यैव युक्तमिदमीदृशं साहसमनुष्ठातुम्। सविचाराणि हि दैवविलसितानि। कदाचिन्नायं नाग इति ज्ञात्वा परित्यजेन्नागशत्रुः। तदनयैव दिशा वैनतेयमनुसरामस्तावत्।

दैवविलसितानि भाग्यक्रीडितानि भाग्यचरितानि वा। अनयैव दिशा रुधिरधारापद्धत्या।

वृद्धा। सव्वहा देवदाणं पसादेण जीवन्तस्स पुत्तअस्स मुहं दंसेम (ख)।

मल०। [आत्मगतम्] दुल्लहं क्खु एदं मम मन्दभग्गाए। (ग)।

जीमू०। वत्स! अवितथैषा तव भारती भवतु। तथापि साग्नीनामेवास्माकं युक्तमनुसर्तुम्। तदनुसरतु भवान्। वयमप्यग्निशरणादग्निमादाय त्वरितमेवानुगच्छामः। [पत्नीवधूसमेतो निष्क्रान्तः]।

अवितथा सत्या। भारती वाणी। अग्निशरणात् अग्निगृहात् 'शरणं गृहरक्षित्रोः' रित्यमरः।

शङ्ख०। तद् यावद् गरुडमनुसरामि। [अग्रतो निर्वर्ण्य]

कुर्वाणो रुधिरार्द्रचञ्चुकषणैर्द्रोणीरिवाद्रेर्नवाः
प्लुष्टोत्खातवनान्तरः स्वनयनज्योतिःशिखाश्रेणिभिः।
मज्जद्वज्रकठोरघोरनखरप्रान्तावगाढावनिः
शृङ्गाग्रे मलयस्य पन्नगरिपुर्दूरादसौ दृश्यते ॥ १० ॥

खण्डान्वयः—

असौ पन्नगरिपुः मलयस्य शृङ्गाग्रे दूराद् दृश्यते। किं कुर्वाणः? अद्रेर्द्रोणीः नवाः कुर्वाणः, कीदृशीर्द्रोणीः? नवाः, कीदृशः पन्नगरिपुः? प्लुष्टोत्खातवनान्तरः। काभिः? स्वनयनज्योतिःशिखाश्रेणीभिः, पुनः कीदृशः? मज्जद्वज्रकठोरनखर-

(क) महाराज! तत् किमस्माभिः प्रतिपाल्यते।
(ख) सर्वदा देवतानां प्रसादेन जीवतः पुत्रस्य मुखं दर्शयामः।
(ग) दुर्लभं खल्वेतत् मम मन्दभाग्यायाः।

प्रान्तावगाढ़ावनिः।

व्याख्या—

मलयोपरि वर्तमानं गरुडं वर्णयति 'कुर्वाण इति' रुधिरेति, रुधिरेण रक्तेन आर्द्रायाः चञ्च्वाः कषणेन घर्षणेन अद्रेः पर्वतस्य नवा नूतना द्रोणीरिव काष्ठमयजलवाहिनीरिव 'द्रोणीकाष्ठाम्बुवाहिनी' त्यमरः। कुर्वाणः, 'स्वनयनेति' स्वस्य नयनयोः यज्ज्योतिः तस्य शिखाश्रेणीभिः अर्चिःपंक्तिभिः प्लुष्टं दग्धम् उत्खातम् उन्मूलितं च वनान्तरं काननप्रदेशो येन तादृश, 'मज्जादिति' मज्जताम् अन्तः प्रविशतां वज्रवत् कठोराणां नखराणां नखानां 'नखोऽस्त्री नखरोऽस्त्रियाम्' मित्यमरः। प्रान्तैः अग्रभागैः अवगाढा विलिखिता अवनिः पृथिवी येन तादृशोऽसौ पन्नगरिपुः नागशत्रुः मलयस्य शृङ्गाग्रे दूराद् दृश्यते अवलोक्यते। अत्रोत्प्रेक्षास्वभावोक्त्योः संकरः। शार्दूलविक्रीडितं वृत्तम् ॥१०॥

[ ततः प्रविशत्यासनस्थः पुरःपतितनायको गरुडः ]

गरुडः। जन्मनः प्रभृति भुजङ्गपतीन् अश्नता नेदमाश्चर्यं मया दृष्टपूर्वम्। यदयं महात्मा न केवलं न व्यथते प्रहृष्ट इव किमपि दृश्यते। तथाहि

ग्लानिर्नाधिकपीयमानरुधिरस्याप्यस्ति धैर्योदये-
र्मांसोत्कर्तनजा रुजोऽपि वहतः प्रीत्या प्रसन्नं मुखम्।
गात्रं यन्न विलुप्तमेकपुलकस्तत्र स्फुटो दृश्यते
दृष्टिर्मय्युपकारिणीव निपतत्यस्यापकारिण्यपि ॥ ११ ॥

जीमूतवाहनस्य लोकोत्तरतां प्रदर्शयति 'ग्लानिरिति' अधिकं पीयमानं रुधिरः यस्य तादृशस्यापि अस्य महात्मनः धैर्योदये उत्साहोद्गमे ग्लानिः खेदो नास्ति, तथा मांसोत्कर्तनजाः मांसस्य उत्कर्तनेन छेदनेन जायन्ते तथाभूता रुजः पीडा वहतः सहमानस्यापि अस्य प्रीत्या स्नेहेन मुखं प्रसन्नं हृष्टमेव, यद् गात्रम् अङ्गं विलुप्तं विच्छिन्नं न, तत्र स्फुटः स्पष्टः एकपुलकः प्रधानरोमोद्गमो दृश्यते, अथ च अस्य दृष्टिः अवलोकनं अपकारिण्यपि अपकारकेऽपि मयि गरुडे उपकारिणीव उपकर्त्तरीव निपतति। अत्रोत्प्रेक्षाविशेषोक्त्योः संकरः। शार्दूलविक्रीडितं वृत्तम् ॥ ११ ॥

ततः कुतूहलमेव जनितमस्यानया धैर्यवृत्त्या। भवतु न भक्षयाम्येवैनम्। पृच्छामि तावत् कोऽयमिति।

नायकः। शिरामुखैः स्यन्दत एव रक्तं-
मद्यापि देहे मम मांसमस्ति।
तृप्तिं न पश्यामि च ते महात्मन्!
किं भक्षणात्त्वं विरतो गरुत्मन्! ॥ १२ ॥

निजदयावीरतां सहसा प्रदर्शयति 'शिरामुखैरिति' शिरामुखैः नाड्यग्रभागैः रक्तं शोणितम् स्यन्दते स्रवतीव। मम देहे शरीरे अद्यापि मांसम् अस्ति वर्तते। हे महात्मन्! ते तव च तृप्तिं सन्तुष्टिं न पश्यामि, अतो हे गरुत्मन्! गरुड! त्वं भक्षणात् किं किमर्थं विरतो निवृत्तः? उपजातिर्वृत्तम् ॥ ६२ ॥

गरुडः। [आत्मगतम्] आश्चर्यमाश्चर्यम्! कथमस्यामप्य-वस्थायामेवमूर्जितमभिधत्ते [प्रकाशम्]।

ऊर्जितम् उदारं यथास्यात्तथा अभिधत्त वदति।

आवर्जितं मया चञ्च्वा हृदयात्तव शोणितम्।
अनेन धैर्येण पुनस्त्वयाहृतमिवाद्य मे ॥ ६३ ॥

'आवर्जितमिति' हे महासत्त्व! मया गरुडेन चञ्च्वा तव हृदयात् शोणितं रक्तम् आवर्जितं हृतम्, पुन. अनेन धैर्येण अद्य त्वया जीमूतवाहनेन मे गरुडस्य शोणितं हृदयात् आहृतमिव। उत्प्रेक्षालंकारः ॥ ६३ ॥

तत् कस्त्वमिति श्रोतुमिच्छामि।

नायक। एवं क्षुधुपततो न श्रावणयोग्यस्त्वम्। कुरुष्व तावत् मम मांसशोणितेन तृप्तिम्।

क्षुधुपतप्त बुभुक्षापीडितः।

शङ्ख०। [सहसोपसृत्य] तार्क्ष्य! न खलु न खलु साहसमनुष्ठे-यम् नायं नागः। परित्यजैनं। मां भक्षय। अहं तवाहारार्थं प्रेषितो-ऽस्मि वासुकिना। (उरो ददाति)

नायकः। [शङ्खचूडं दृष्ट्वा] कष्टं! विफलीभूतो मे मनोरथः शङ्खचूडेनागच्छता।

गरुडः। [उभौ निरूप्य] द्वयोरपि भवतोर्वध्यचिह्नम्। कः खलु नाग इति नावगच्छामि।

शंख०। स्थान एव भ्रान्तिः।

स्थान एव भ्रान्तिः, इति विपरीतलक्षणयोक्तम्, तव भ्रान्तिर्निष्फलैवेति भावः।

आस्तां स्वस्तिकलक्ष्म वक्षसि तनौ नालोक्यते कञ्चुको?
जिह्वे जल्पत एव मे न गणिते नाम त्वया द्वे अपि?
तिस्रस्तीव्रविषाग्निधूमपटलव्याजिह्मरत्नत्विषो
नैता दुस्सहशोकसीत्कृतमरुत्पीडाः फणाः पश्यसि ॥ ६४ ॥

अनुचिता तव भ्रान्तिरिति दर्शयति 'आस्तामिति' वक्षसि उरसि स्वस्तिकलक्ष्म स्वस्तिकं नाम नागलक्षणं तु आस्तां तिष्ठतु, तनौ शरीरे कञ्चुको निर्मोकः सर्पत्वगिति यावत् 'समौ कञ्चुकनिर्मोकौ' वित्यमरः। न दृश्यते। त्वयेति शेष.।

अपि तु दृश्यते एव । जल्पत आभाषणं कुर्वत एव मे मम त्वया नाम ( सम्भावनायाम् ) द्वे अपि जिह्वे रसने न गणिते ? अपि तु गणिते एव । ' तीव्रेति ' तीव्रस्तीक्ष्णो यो विषाग्नि. तस्य धूमपटलेन धूमनिचयेन व्याजिह्माहततेजस्कारत्नाना त्विषः कान्तयो यासा तादृशी., ' दुःसहेति ' दुस्सह सेतुमशक्यो य शोकस्तेन यत् सीत्कृतं तदेव कम्पनकारित्वाद् मरुत् पवन. तेन पीडा सञ्जातव्यथा एताः प्रत्यक्षं दृश्यमानाः तिस्रः त्रिसंख्याका' फणा. न पश्यसि ? अत्र काकुवक्रोक्तिरलंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ ६४ ॥

गरुडः । [ उभौ निरूप्य शंखचूडस्य फणां दृष्ट्वा ] तत्कः खलु मया व्यापादितः ।

शंख० । विद्याधरवंशतिलको जीमूतवाहन । कथमकारुणिकेन त्वया इदमनुष्ठितम् ।

गरुडः । [ स्वगतम् ] कथमनुष्ठितम् । अयं विद्याधरकुमारो जीमूतवाहन ?

मेरौ मन्दरकन्दरासु हिमवत्सानौ महेन्द्राचले<br>
कैलासस्य शिलातलेषु मलयप्राग्भारभागेष्वपि ।<br>
दिक्कुञ्जेषु च तेषु तेषु बहुशो यस्य श्रुतं तन्मया<br>
लोकालोकविचारिचारणगणैरुद्गीयमानं यशः ॥ ६  ॥

' मेराविति ' यस्य मया मेरौ सुमेरुपर्वते, मन्दरकन्दरासु मन्दराचलदरीषु ' दरीतु कन्दरो वास्त्री ' त्यमर. । हिमवत्सानौ हिमालयप्रस्थे, ' स्नुः प्रस्थ सानुरस्त्रिया ' मित्यमरः । महेन्द्राचले इन्द्रकीलपर्वते, कैलासस्य शिवपर्वतस्य शिलातलेषु, मलयस्य प्राग्भारभागेषु पूर्वदिग्वर्त्तिखण्डेष्वपि, तेषु तेषु पूर्वानुभूतेषु दिक्कुञ्जेषु दिशां निकुञ्जेषु च, लोकालोके तदाख्यपर्वतविशेषे विचारिभि विहारिभि चारणगणै. चारणा नटविशेषास्तेषां गणै समूहैः उद्गीयमानम् उच्चैः स्वरेण गीयमानं तद् यश बहुशोऽनेकवारं श्रुतम्, सोऽयं विद्याधरकुमारो जीमूतवाहन इति वाक्यशेष । शार्दूलविक्रीडितं वृत्तम् । अत्रैकस्य यशसोऽनेकाधारत्वात् विशेषालंकारः । ' यदाधेयमनाधारमेकं चानेकगोचरम् । किंचित्प्रकुर्वत कार्यमशक्यस्येतरस्य वा । कार्यस्य करण दैवाद् विशेष स्त्रिविधस्तत ' इति दण्डिवचनात् ६५

सर्वथा महत्यंहःपङ्के निमग्नोऽस्मि ।

अंहःपङ्के पापपंके ।

नायक । भोः फणिपते ! किमेवमुद्विग्नोऽसि ।

उद्विग्नोऽसि खिन्नोऽसि ।

शङ्ख० । किमस्थानमिदमावेगस्य ।

आवेगस्य खेदस्य ।

स्वशरीरमिदं दत्वा तार्क्ष्यात् परिरक्षितं यदीयमिदम्।
युक्तं नेतुं भवत पातालतलादपि तलं माम् ॥ ६६ ॥

'स्वशरीरमिति' त्वया इदं स्वशरीरं दत्वा यदीयं यत्सम्बन्धि इदं शरीरं तार्क्ष्याद् गरुडात् परिरक्षितं परिपालितम्, तादृशं मां भवतः पातालतलादपि तलम् अधस्ताद् नेतुं न युक्तम् नोचितम्, पूर्वं तु अहं सर्वेभ्योऽधः पाताले निवसामि सम्प्रत्यतन्निन्द्यकर्मकरणात्तत्रापि मुखं दर्शितुं न शक्त इति भावः। काव्यलिङ्गालङ्कार ॥ ६६ ॥

गरुडः। अये! करुणार्द्रचेतसा अनेन महात्मना अस्मद्ग्रासगोचरपतितस्यास्य फणिनः प्राणान् रक्षितुं स्वदेह आहारार्थमुपनीतः। तन्महदकृत्यमेतन्मया कृतम्। किं बहुना बोधिसत्व एवायं व्यापादितः। तस्य महतः पापस्य अग्निप्रवेशादृते नान्यत् प्रायश्चित्तं पश्यामि। तत् क्व नु खलु वह्निं समासादयामि।

बोधिसत्व', तदाख्यो दयास्वरूपः कश्चिन्महात्मा। समासादयामि अन्वेषयामि।

[दिशः पश्यन्।] अये! अमी केचित् गृहीताग्नय इत एवागच्छन्ति। तद् यावदेतान् प्रतिपालयामि।

शङ्ख०। कुमार! पितरौ ते प्राप्तौ।

नायकः। [ससम्भ्रमम्] शंखचूड! समुपविश्योत्तरीयेण आच्छादितशरीरं कृत्वा धारय माम्। अन्यथा कदाचिदीदृशं सहसैव मां दृष्ट्वा अम्बा जीवितं जह्यात्।

शङ्ख०। [पार्श्वपतितमुत्तरीयं गृहीत्वा तथा करोति]।

[ततः प्रविशति पत्नीवधूसमेतो जीमूतकेतुः]

जीमू०। [सास्रम्] हा पुत्र जीमूतवाहन!
आत्मीयः पर इत्ययं खलु कुतः सत्यं कृपायां क्रमः
किं रक्ष्या बहव किमेक इति ते जाता न चिन्ता कथम्।
तार्क्ष्यात् त्रातुमहिं स्वजीवितपरित्यागं त्वया कुर्वता
येनात्मा पितरौ वधूरिति हतं निःशेषमेतत् कुलम् ॥ ६७ ॥

विलापं कुर्वन्नाह—'आत्मीय इति' सत्यमेतत्, अयम् आत्मीयः स्वकीय अयं च परः अन्य, इत्ययं क्रमः प्रकारः कृपाया दयाया परोपकारव्यसन इत्यर्थः। कुतः न कदापि भवितुमर्हतीत्यर्थः। हे पुत्र? किं बहवो रक्ष्या किंवा एको रक्ष्य इति ते तव चिन्ता विचारणा कथं न जाता? येन कारणेन तार्क्ष्याद् गरुडाद् अहिम् एकं नागं त्रातुं रक्षितुं स्वजीवितपरित्यागं निजप्राणविमोचनं कुर्वता त्वया, आत्मा स्वदेहः, पितरौ, वधूः स्त्री, इत्येतद् निश्शेषं सर्वं कुलं हतं विनाशितम्। [illegible] समर्थनरूपेऽर्थान्तरन्यासोऽलंकारः। शार्दूलविक्रीडितं वृत्तम् ॥ ६७ ॥

वृद्धा । [ मलयवतीमुद्दिश्य ] जादे ! विरम मुहुत्तअं । अविरल-निवडन्तवाप्पविन्दूहिं अहिहवीअदि अअं अग्गी ( क ) ।

[ सर्वे परिक्रामन्ति ]

जीमू० । हा पुत्र जीमूतवाहन !

गरुडः । [ श्रुत्वा । ] हा ! जीमूतवाहनेति ब्रवीति । तद्व्यक्त-मयमस्य पिता । तत् किमेतदीयेनाग्निना आत्मानमुद्दीपयामि । न शक्नोमि अस्य पुत्रघातलज्जया मुखं दर्शयितुम् । अथवा किमग्निहेतो-पर्य्याकुलोऽस्मि । तटस्थ एवास्मि जलनिधे । तद् यावदिदानीं ।

ज्वालाभङ्गैस्त्रिलोकग्रसनरसलसत्कालजिह्वाग्रकल्पैः
सर्पद्भिः सप्तसप्तेः पदमिव कवलीकर्त्तुमीशैः समुद्रे ।
स्वैरेवोत्पातवातप्रसरपटुतरैर्धुक्षिते पक्षवातै-
रस्मिन् कल्पावसानज्वलनभयकरे वाडवाग्नौ पतामि ॥ ६८ ॥

' ज्वालाभङ्गैरिति '

खण्डान्वयः—

समुद्रे अस्मिन् वाडवाग्नौ पतामि, कैः उपलक्षिते ? ज्वालाभङ्गैः, कीदृशैः ? त्रिलोकग्रसनरसलसत्कालजिह्वाग्रकल्पैः, किं कुर्वद्भिः ? सर्पद्भिः, पुनः कीदृशैः ? सप्तसप्तेः पदमिव कवलीकर्त्तुम् ईशैः, पुनः कीदृशे ? स्वैः एव पक्षवातैर्धुक्षिते, कीदृशैः पक्षवातैः ? उत्पातवातप्रसरपटुतरैः, पुनः कीदृशे वाडवाग्नौ ? कल्पा-वसानज्वलनभयकरे ।

व्याख्या—

प्रायश्चित्तं विचारयति ' ज्वालाभङ्गैरिति ' समुद्रे ' त्रिलोकेति ' त्रिलोकस्य ग्रसने यो रस आस्वादस्तेन लसद् विलासं कुर्वद् यत् कालजिह्वाग्रं मृत्युरसनाग्र-भागं तत्कल्पैः तत्सदृशैः, सर्पद्भिः इतस्ततः प्रसरद्भिः अतएव सप्तसप्तेः सप्तसप्तयो वाजिनो यस्य तादृशस्य सूर्यस्य पदं स्थानं सूर्यलोकमिव कवलीकर्त्तुं ग्रासीकर्त्तुम् ईशैः समर्थैः, एतादृशैः ज्वालाभङ्गैः ज्वालासमूहैः उपलक्षिते, तथा ' उत्पातेति ' उत्पातस्य उपसर्गस्य वातस्य वायोः प्रसरेण विस्तरेण पटुतरैः प्रचण्डैः स्वैरेव आत्मीयैरेव पक्षवातैः पक्षवायुभिः धुक्षिते दीपिते, तथा ' कल्पेति ' कल्पावसाने प्रलयान्ते यो ज्वलनो वह्निस्तद्वद् भयकरे भीतिजनके एतादृशे अस्मिन् वाडवाग्नौ समुद्राग्नौ पतामि । उपमोत्प्रेक्षयोः संसृष्टिः । स्रग्धरावृत्तम् ॥ ६८ ॥

[ इत्युत्थातुमिच्छति ]

नायकः । भो पक्षिराज ! अलमनेनाध्यवसायेन । नायं प्रती-कारोऽस्य पाप्मनः ।

---

( क ) जाते ! विरम मुहूर्त्तम् । अविरलनिपतद्बाष्पबिन्दुभिरभिभूयतेऽयमग्निः ।

अध्यवसायेन उद्यमेन। प्रतीकारः प्रायश्चित्तम्। पाप्मनः पापस्य।

गरुडः। [जानुभ्यां स्थित्वा कृताञ्जलिः] भो महात्मन्! कस्तर्हि कथ्यताम्।

नायकः। प्रतिपालय क्षणमेकम्। पितरौ मे प्राप्तौ। यावदेतौ प्रणमामि।

गरुडः। एवं क्रियताम्।

जीमू०। [दृष्ट्वा सहर्षम्] देवि! दिष्ट्या वर्द्धसे। अयं वत्सो जीमूतवाहनो न केवलं म्रियते। प्रत्युत कृताञ्जलिना गरुडेन शिष्येणेव पर्य्युपास्यमानस्तिष्ठति।

वृद्धा। महाराअ! कअत्थह्मि। अक्खदसरीरस्स मुहं पेक्खिस्सं (क)।

मल०। अहं अज्जउत्तं पेक्खिअ अदिपिअत्ति करिअ ण पत्तिआमि (ख)।

प्रत्येमि। निश्चिनोमि।

जीमू०। [उपसृत्य] वत्स! एह्येहि, परिष्वजस्व माम्।

परिष्वजस्व आलिङ्गय।

नायक। उत्थातुमिच्छन् पतितोत्तरीयो मूर्च्छति।]

शङ्ख०। कुमार! समाश्वसिहि।

जीमू०। हा वत्स! कथं मां दृष्ट्वा परिष्वङ्गं गतोऽसि।

परिष्वंगम् आलिंगन गतोऽसि प्राप्तोऽसि।

वृद्धा। हा पुत्तक! कहं वाआमेत्तकेण वि तुए ण सम्भाविदह्मि (ग)।

मल०। हा अज्जउत्त! अहं गुरुअणो विदेण पेक्खिदव्वो (घ)। [सर्वे मोहं गच्छन्ति।]

शङ्ख०। हा! शङ्खचूडहतक! कथं गर्भस्थ एव न विपन्नोऽसि। येनैवं क्षणे क्षणे मरणातिगं दुःखमनुभवसि।

विपन्नोऽसि विनष्टोऽसि।

गरुडः। सर्वमिदं मम नृशंसस्य असमीक्ष्यकारितायाः विजृम्भितम्। तदेवं तावत् करोमि। [पक्षाभ्यां वीजयन्।] भो महा-

---

(क) महाराज! कृतार्थास्मि! अक्षतशरीरस्य मुखं प्रेक्षिष्ये।

(ख) अहमार्य्यपुत्रं प्रेक्ष्य अतिप्रियमिति कृत्वा न प्रत्येमि।

(ग) हा पुत्रक! कथं वाङ्मात्रेणापि त्वया न सम्भावितास्मि।

(घ) हा आर्य्यपुत्र! कथं गुरुजनोऽपि ते न प्रेक्षितव्यः।

वृद्धा । [ मलयवतीमुद्दिश्य ] जादे ! विरम मुहुत्तअं । अविरलणिवडन्तवाप्पबिन्दूहिं अहिहवीअदि अअं अग्गी ( क ) ।

[ सर्वे परिक्रामन्ति ]

जीमू० । हा पुत्र जीमूतवाहन !

गरुड० । [ श्रुत्वा । ] हा ! जीमूतवाहनेति ब्रवीति । तद्व्यक्तमयमस्य पिता । तत् किमेतदीयेनाग्निना आत्मानमुद्दीपयामि । न शक्नोमि अस्य पुत्रघातलज्जया मुखं दर्शयितुम् । अथवा किमग्निहेतो पर्य्याकुलोऽस्मि । तटस्थ एवास्मि जलनिधेः । तद् यावदिदानीं ।

ज्वालाभङ्गैस्त्रिलोकग्रसनरसलसत्कालजिह्वाग्रकल्पैः
सर्पद्भिः सप्तसप्तेः पदमिव कवलीकर्त्तुमीशैः समुद्रे ।
स्वैरेवोत्पातवातप्रसरपटुतरैर्धुक्षिते पक्षवातै-
रस्मिन् कल्पावसानज्वलनभयकरे वाडवाग्नौ पतामि ॥ ६८ ॥

'ज्वालाभङ्गैरिति'

खण्डान्वयः—

समुद्रे अस्मिन् वाडवाग्नौ पतामि, कैः उपलक्षिते ? ज्वालाभङ्गैः, कीदृशैः ? त्रिलोकग्रसनरसलसत्कालजिह्वाग्रकल्पैः, किं कुर्वद्भिः ? सर्पद्भिः, पुनः कीदृशैः ? सप्तसप्तेः पदमिव कवलीकर्त्तुम् ईशैः, पुनः कीदृशे ? स्वैः एव पक्षवातैर्धुक्षिते, कीदृशैः पक्षवातैः ? उत्पातवातप्रसरपटुतरैः, पुनः कीदृशे वाडवाग्नौ ? कल्पावसानज्वलनभयकरे ।

व्याख्या—

प्रायश्चित्तं विचारयति 'ज्वालाभङ्गैरिति' समुद्रे 'त्रिलोकेति' त्रिलोकस्य ग्रसने यो रस आस्वादस्तेन लसद् विलासं कुर्वद् यत् कालजिह्वाग्रं मृत्युरसनाग्रभागः तत्कल्पैः तत्सदृशैः, सर्पद्भिः इतस्ततः सञ्चरद्भिः अतएव सप्तसप्तेः सप्तसप्तयो वाजिनः यस्य तादृशस्य सूर्यस्य पदं स्थानं सूर्यलोकमिव कवलीकर्त्तुं ग्रासीकर्त्तुम् ईशैः समर्थैः, एतादृशैः ज्वालाभङ्गैः ज्वालासमूहैः उपलक्षिते, तथा 'उत्पातेति' उत्पातस्य उपसर्गस्य वातस्य वायोः प्रसरेण विस्तरेण पटुतरैः प्रचण्डैः स्वैरेव आत्मीयैरेव पक्षवातैः पक्षवायुभिः धुक्षिते दीपिते, तथा 'कल्पेति' कल्पावसाने प्रलयान्ते यो ज्वलनो वह्निस्तद्वद् भयकरे भीतिजनके एतादृशे अस्मिन् वाडवाग्नौ समुद्राग्नौ पतामि । उपमोत्प्रेक्षयोः संसृष्टिः । स्रग्धरावृत्तम् ॥ ६८ ॥

[ इत्युत्थातुमिच्छति ]

नायकः । भो पक्षिराज ! अलमनेनाध्यवसायेन । नायं प्रतीकारोऽस्य पाप्मनः ।

( क ) जाते ! विरम मुहूर्त्तम् । अविरलनिपतद्बाष्पबिन्दुभिरभिभूयतेऽयमग्निः ।

अध्यवसायेन उद्यमेन। प्रतीकार. प्रायश्चित्तम्। पाप्मनः पापस्य।

गरुडः। [जानुभ्यां स्थित्वा कृताञ्जलिः] भो महात्मन्! कस्तर्हि कथ्यताम्।

नायकः। प्रतिपालय क्षणमेकम्। पितरौ मे प्राप्तौ। यावदेतौ प्रणमामि।

गरुडः। एवं क्रियताम्।

जीमू०। [दृष्ट्वा सहर्षम्] देवि! दिष्ट्या वर्द्धसे। अयं वत्सो जीमूतवाहनो न केवलं ध्रियते। प्रत्युत कृताञ्जलिना गरुडेन शिष्येणेव पर्य्युपास्यमानस्तिष्ठति।

वृद्धा। महाराअ! किअत्थह्मि। अक्खदसरीरस्स मुहं पेक्खिस्सं (क)।

मल०। अहं अज्जउत्तं पेक्खिअ अदिपिअत्ति करिअ ण पत्तिआमि (ख)।

प्रत्येमि। निश्चिनोमि।

जीमू०। [उपसृत्य] वत्स! एह्येहि, परिष्वजस्व माम्।

परिष्वजस्व आलिङ्गय।

नायक। [उत्थातुमिच्छन् पतितोत्तरीयो मूर्च्छति।]

शङ्ख०। कुमार! समाश्वसिहि।

जीमू०। हा वत्स! कथं मां दृष्ट्वा परिष्वङ्गं गतोऽसि।

परिष्वंगम् आलिंगन गतोऽसि प्राप्तोऽसि।

वृद्धा। हा पुत्तक! कहं वाआमेत्तकेण वि तुए ण सम्भाविदह्मि (ग)।

मल०। हा अज्जउत्त! अहं गुरुअणो विदेण पेक्खिदव्वो (घ)। [सर्वे मोहं गच्छन्ति।]

शङ्ख०। हा! शङ्खचूडहतक! कथं गर्भस्थ एव न विपन्नोऽसि। येनैवं क्षणे क्षणे मरणातिगं दुःखमनुभवसि।

विपन्नोऽसि विनष्टोऽसि।

गरुडः। सर्वमिदं मम नृशंसस्य असमीक्ष्यकारिताया विजृम्भितम्। तदेवं तावत् करोमि। [पक्षाभ्यां वीजयन्।] भो महा-

(क) महाराज! कृतार्थास्मि! अक्षतशरीरस्य मुखं प्रेक्षिष्ये।
(ख) अहमार्य्यपुत्र प्रेक्ष्य अतिप्रियमिति कृत्वा न प्रत्येमि।
(ग) हा पुत्रक! कथं वाङ्मात्रेणापि त्वया न सम्भावितास्मि।
(घ) हा आर्य्यपुत्र! कथं गुरुजनोऽपि ते न प्रेक्षितव्य.।

त्मन् ! समाश्वसिहि समाश्वसिहि ।

नृशंसस्य घातुकस्य । असमीक्ष्यकारितायाः अविचार्यकारितायाः । विजृम्भितं चेष्टितम् ।

नायकः । [ समाश्वस्य । ] शङ्खचूड ! समाश्वासय गुरून् ।

शंख० । तात ! समाश्वसिहि समाश्वसिहि । अम्ब ! समाश्वसिहि समाश्वसिहि । [ उभौ समाश्वसितः । ]

वृद्धाः । पुत्त ! कहं पेक्खन्ताणं एव्व अम्हाणं कदन्तहदएण अवहरीअसि ( क ) ।

जीमू० । देवि ! मैवममङ्गल्यवादिनी भव । ध्रियत एवायुष्मान् । तद्वधूः समाश्वास्यताम् ।

वृद्धा । [ मुखं वस्त्रेणावृत्य रुदती । ] पडिहदममङ्गलम् । ण रोदिस्सम् । मलअवदि ! समस्सस । वच्छे ! उट्ठेहि उट्ठेहि । वरं पच्छिअवेलं तुमं भत्तुणो मुहं पेक्ख ( ख ) ।

मल० [ समाश्वस्य । हा अज्जउत्त ! ( ग ) ।

वृद्धा । [ मलयवत्या मुखं पिधाय ] वच्छे ! मा एव्वं करेहि । पडिहदं क्खु एदं ( घ ) ।

जीमू० । [ सास्रमात्मगतम् । ]

विलुप्तशेषाङ्गतया प्रयातान् निराश्रयत्वादिव कण्ठदेशम् ।
प्राणांस्त्यजन्तं तनयं निरीक्ष्य कथं न तापात् शतधा प्रयामि ॥ ६६ ॥

'विलुप्तेति' अह विलुप्तशेषाङ्गतया विलुप्तशेषाणि विनष्टशेषाणि यानि अगानि अवयवास्तेषां भाव विलुप्तशेषाङ्गता तया हेतुना निराश्रयत्वादिव निराधारत्वादिव कण्ठदेशं प्रयातान् प्राणान् असून् त्यजन्तं तनयं सुतं निरीक्ष्य दृष्ट्वा तापात् सन्तापात् शतधा शतविधं कथं न प्रयामि कथं न शतखण्डो भूत्वा विदीर्ये इत्यर्थ । उत्प्रेक्षालंकार ॥ उपजातिर्वृत्तम् ॥ ६६ ॥

मल० । हा अज्जउत्त ! अदिदुक्करकारिणी क्खु अहं । जा ईदिसं अज्जउत्तं पेक्खन्ती अज्जावि जीविअं ण परिच्चआमि ( ङ ) ।

---

( क ) कथं प्रेक्षमाणानामेवास्माकं कृतान्तहतकेनापह्रियसे ।

( ख ) प्रतिहतममङ्गलम् । न रोदिष्यामि । मलयवति ! समाश्वसिहि वरमेतस्या वेलाया त्व भर्तुर्मुखं प्रेक्षस्व ।

( ग ) हा आर्यपुत्र !

( घ ) वत्से ! मैवं कुरु । प्रतिहतं खल्वेतत् ।

( ङ ) हा आर्यपुत्र ! अतिदुष्करकारिणी खल्वहम् । या ईदृशम् आर्यपुत्रं प्रेक्षमाणा अद्यापि जीवितं न परित्यजामि ।

वृद्धा। [ नायकस्याङ्गानि स्पृशन्ती गरुडमुद्दिश्य ] णिसंस ! कहं दाणीं तुए एदं आरुहमाणणवजोव्वणसोहं तं एव्व एदावत्थं पुत्तअस्स मे सरीरं किदम् ( क )।

नायकः। अम्ब ! मा भवं। किमनेन कृतम्। ननु पूर्व्वमप्येतदीदृशमेव परमार्थतः। पश्य

परमार्थतः वास्तवेन।

मेदोऽस्थिमांसमज्जासृक्सङ्घातेऽस्मिंस्त्वचावृते।
शरीरे वास्ति का शोभा सदा बीभत्सदर्शने ?॥ १००॥

'मेद इति' मेदसां वसाना अस्थ्ना हड्डाना मांसस्य असृजो रुधिरस्य च सङ्घाते समूहरूप त्वचा चर्मणा आवृते आच्छन्ने सदा सर्वस्मिन्नेव काले बीभत्सदर्शने बीभत्सस्य घृणाया दर्शनं यत्र तादृशे अस्मिन् शरीरे का वा शोभा द्युतिः अस्ति। न कापीत्यर्थ। परिकरालंकारः॥ १००॥

गरुडः। भो महात्मन् ! नरकानलज्वालावलीढमिवात्मानं मन्यमानो दुःखं तिष्ठामि। तदुपदिश्यतां येन मुच्येयमस्मादेनसः।

'नरकेति' नरकानलस्य नरकवन्हेर्ज्वालाभिः शिखाभि. अवलीढं दग्धमिव। एनस. पापात्।

नायकः। अनुजानातु मां तातः। यावदस्य पापस्य प्रतिपत्तमुपदिशामि।

अनुजानातु आज्ञापयतु। प्रतिपत्तं प्रतीकारम्।

जीमू०। वत्स ! एवं क्रियताम्।

नायकः। वैनतेय ! श्रूयताम्।

गरुड [ कृताञ्जलि ] आज्ञापय।

नायक।

नित्यं प्राणाभिघातात् प्रतिविरम कुरु प्राक्कृतस्यानुतापं
यत्नात् पुण्यप्रवाहं समुपचिनु दिशन् सर्वसत्त्वेष्वभीतिम्।
मग्नं येनात्र नैनः फलति परिणतं प्राणिहिंसासमुत्थं
येनैतद्वारिपूरे लवणकणमिव क्षिप्तमन्तर्ह्रदस्य॥ १०१॥

प्रायश्चित्तमुपदिशति 'नित्यमिति' प्राणाभिघातात् परप्राणहिंसात. नित्य प्रतिविरम निवर्त्तस्व, प्राक्कृतस्य पूर्वकृतस्य जीवहिंसारूपस्य पापस्य अनुतापं पश्चात्ताप 'पश्चात्तापेऽनुतापश्च' त्यमर। कुरु, सर्वसत्त्वेषु सम्पूर्णजीवेषु अभीतिम् अभयं दिशन् ददत् सन् यत्नात् पुण्यप्रवाहं सुकृतनिचयं समुपचिनु समुपार्जय,

( क ) नृशंस ! कथमिदानीं त्वया एतदारोहन्नवयोवनशोभं तदेवैतावदवस्थं पुत्रकस्य मे शरीरं कृतम्।

येन हेतुना येन पूर्वोक्तानुष्ठानेन अत्र अस्मिन् संसारे प्राणिहिंसासमुत्थं जीवहननसमुद्भव परिणतं परिपक्कं फलोन्मुखमित्यर्थ. । एन पापं ह्रदस्य जलाशयस्य अन्तर्मध्ये वारिपूरे जलप्रवाहे क्षिप्तं पातितं लवणकणं सैन्धवमिव मम गलितं न फलति परिणमति । पुनर्नरकादिकं नोत्पादयतीत्यर्थ. । अत्र कारकदीपकोपमयो ससृष्टि । स्रग्धरावृत्तम् ॥ १०१ ॥

गरुड यदाज्ञापयसि ।

अज्ञाननिद्राशयितो भवता प्रतिबोधितः ।
सर्वप्राणिवधादेष विरतोऽद्य प्रभृत्यहम् ॥ १०२ ॥

अज्ञानेति' अज्ञानमेव निद्रा शयनं तेन शयितः सुप्त, भवता त्वया जीमूतवाहनेन प्रतिबोधित. जागरितः एषोऽहं गरुड· अद्यप्रभृति अस्माद्दिवसादारभ्य सर्वेषां प्राणिनां वधात् मारणाद् विरतो निवृत्त. ॥ १०२ ॥

सम्प्रतिहि

क्वचिद् द्वीपाकारैः पुलिनविपुलैर्भोगनिवहैः
कृतावर्त्तभ्रान्तिर्वलयितशरीरः क्वचिदपि ।
व्रजन् कूलात् कूलं क्वचिदपि च सेतुप्रतिसमः ।
समाजो नागानां विचरतु महोदन्वति सुखम् १०३ ॥

नागानां स्वातन्त्र्यमाह—'क्वचिदिति' क्वचित् कस्मिंश्चित्प्रदेशे द्वीपाकारै. सर्वतो जलेन परिवृतो भूभागो द्वीपमित्युच्यते तत्स्वरूपैः पुलिनविपुलै. पुलिन सैकतं 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामय' मित्यमर । तद्वद् विपुलै· उन्नत, एतादृशै भोगनिवहै· शरीरसमूहै 'अहे· शरीरं भोग स्या' दित्यमर । उपलक्षित, क्वचिदपि वलयितशरीर वलयित मण्डलीकृतं शरीरं येन तादृश अतएव कृतावर्त्तभ्रान्ति कृता आवर्तस्य जलभ्रमस्य 'स्यादावर्त्तोऽम्भसां भ्रम' इत्यमर । भ्रान्ति· शङ्का येन तथोक्त क्वचिदपि च सेतुप्रतिसम सेतुसदृश कूलात्कूलं तटात् तट व्रजन् गच्छन् नागाना समाज समूह. महोदन्वति महासागरे सुख निरशङ्कं यथा स्यात्तथा विचरतु विहरतु । उपमालङ्कारः ॥ शिखरिणीवृत्तम् 'रसै रुद्रैश्छिन्ना यमनसभला ग शिखरिणी' इति लक्षणात् ॥ १०३ ॥

स्रस्तानापादलम्बान् घनतिमिरनिभान् केशपाशान् वहन्त्यः
सिन्दूरेणेव दिग्धै प्रथमरविकरस्पर्शताम्रैः कपोलैः ।
आयासेनालसाद्यैऽप्यवगणितरुजः कानने चन्दनानाम्
अस्मिन् गायन्तु रागादुरगयुवतयः कीर्त्तिमेतां तवैव ॥ १०४ ॥

नागाना जीवनान्नागीनामपि हर्षं वर्णयति ' स्रस्तानिति ' स्रस्तान् स्खलितान् आपादलम्बान चरणपर्यन्तपतितान् घनतिमिरनिभान् गाढान्धकारसदृशान् कृष्णवर्णत्वात् केशपाशान ग्रथितकेशान वहन्त्य. धारयन्त्य, प्रथमा प्रात

कालीना ये रविकराः सूर्यकिरणाः तेषां स्पर्शेन ताम्रैः लोहितवर्णैः अतएव सिन्दूरेण रक्तचूर्णकेण 'सिन्दूरं रक्तचूर्णके इति मेदिनी' दिग्धैः लिप्तैरिव कपोलैः गण्डैः उपलक्षिताः, आयासेन श्रमेण अलसांग्यः खिन्नांग्योऽपि अवगणितरुजः अचिन्तितपीडा हर्षातिरेकादिति भाव, एतादृश्यः उरगयुवतयः नागवधूट्यः अस्मिन् चन्दनानां कानने वने रागात् प्रेम्णा एतां तव जीमूतवाहनस्यैव 'एवशब्दोऽवधारणार्थकः' न ममेति भावः, कीर्तिं यशः गायन्तु कीर्तयन्तु। उत्प्रेक्षालंकारः। स्रग्धरावृत्तम् ॥ १०४ ॥

नायकः। साधु महासत्त्व! साधु अनुमोदामहे सर्वथा दृढसमाधानो भव। [ शङ्खचूडं निर्दिश्य ] शंखचूड! त्वयापि स्वगृहमिदानीं गम्यताम्।

अनुमोदामहे हृष्यामः। दृढसमाधानः दृढमतः।

शङ्ख०। [ निश्वस्य अधोमुखस्तिष्ठति ]।

नायकः। [ निःश्वस्य मातरं पश्यन् ]।

उत्प्रेक्षमाणा त्वां तार्क्ष्य चञ्चुकोटिनिपातितम्।
त्वद्दुःखदुःखिता नूनमास्ते स जननी तव ॥ १०५ ॥

'उत्प्रेक्षमाणेति' हे शङ्खचूड! तार्क्ष्येण गरुडेन चञ्चुकोट्या चञ्चुप्राग्भागेन निपातितं निक्षिप्तं त्वाम् उत्प्रेक्षमाणा सम्भावयन्ती सा तव जननी माता नूनं निश्चितं त्वद्दुःखेन दुःखिता पीडिता आस्ते तिष्ठति। उत्प्रेक्षालङ्कारः ॥ १०५ ॥

वृद्धा। [ सास्रम् ] धण्णा क्खु सा जणणी जा गरुडमुहपडिदस्स अक्खदसरीरस्स एव्व पुत्तअस्स मुहं पेक्खिस्सदि (क)।

शङ्ख०। अम्ब! सत्यमेवैतत्। यदि कुमारः स्वस्थो भविष्यति।

नायकः। [ वेदनां नाटयन् ] अहह! परार्थसम्पादनरसाक्षेपादेतावती वेला मया न लक्षिता। सम्प्रति तु मां बाधितुमारब्धा मर्मच्छेदिन्यो वेदना। [ मरणावस्थां नाटयति ]।

वेदना पीडाम्। 'परार्थेति' परार्थसम्पादने परोपकारान् कर्तुम् आनन्दस्तस्य आक्षेपात् अतिशयात्। एतावती वेला एतावान् कालः

जीमू०। [ ससम्भ्रमम् ] हा वत्स! किमेवं करोषि

वृद्धा। हा किं णु क्खु एव्वं वदादि। [ सोरस्ताडम् ] परित्ता-

(क) धन्या खलु सा जननी या गरुडमुखपतितस्याक्षतशरीरस्यैव पुत्रकस्य मुखं प्रेक्षिष्यते।

येन हेतुना येन पूर्वोक्तानुष्ठानेन अत्र अस्मिन् संसारे प्राणिहिंसासमुत्थं जीवहनन-समुद्भवं परिणतं परिपक्कं फलोन्मुखमित्यर्थः । एनः पापं ह्रदस्य जलाशयस्य अन्तर्मध्ये वारिपूरे जलप्रवाहे क्षिप्तं पातितं लवणकणं सैन्धवमिव मग्नं गलितं न फलति परिणमति । पुनर्नरकादिकं नोत्पादयतीत्यर्थः । अत्र कारकदीपकोपमयो संसृष्टिः । स्रग्धरावृत्तम् ॥ १०१ ॥

गरुड यदाज्ञापयसि ।

अज्ञाननिद्राशयितो भवता प्रतिबोधितः ।
सर्वप्राणिवधादेष विरतोऽद्य प्रभृत्यहम् ॥ १०२ ॥

अज्ञानेति' अज्ञानमेव निद्रा शयनं तेन शयितः सुप्तः, भवता त्वया जीमूत वाहनेन प्रतिबोधितः जागरितः एषोऽहं गरुडः अद्यप्रभृति अस्माद्दिवसादारभ्य सर्वेषां प्राणिनां वधात् मारणाद् विरतो निवृत्तः ॥ १०२ ॥

सम्प्रतिहि

क्वचिद् द्वीपाकारैः पुलिनविपुलैर्भोगनिवहैः
कृतावर्त्तभ्रान्तिर्वलयितशरीरः क्वचिदपि ।
व्रजन् कूलात् कूलं क्वचिदपि च सेतुप्रतिसमः ।
समाजो नागानां विचरतु महोदन्वति सुखम् १०३ ॥

नागानां स्वातन्त्र्यमाह—'क्वचिदिति' क्वचित् कस्मिंश्चित्प्रदेशे द्वीपाकारैः सर्वतो जलेन परिवृतो भूभागो द्वीपमित्युच्यते तत्स्वरूपैः पुलिनविपुलैः पुलिनं सैकतं 'तोयोत्थितं तत्पुलिनं सैकतं सिकतामय' मित्यमरः । तद्वद् विपुलैः उन्नतैः, एतादृशैः भोगनिवहैः शरीरसमूहैः 'अहेः शरीरं भोगः स्या' दित्यमरः । उपलक्षितः, क्वचिदपि वलयितशरीरः वलयितं मण्डलीकृतं शरीरं येन तादृशः अतएव कृतावर्त्तभ्रान्तिः कृता आवर्तस्य जलभ्रमस्य 'स्यादावर्त्तोऽम्भसां भ्रम' इत्यमरः । भ्रान्तिः शंका येन तथोक्तः क्वचिदपि च सेतुप्रतिसमः सेतुसदृशः कूलात्कूलं तटात् तटं व्रजन् गच्छन् नागानां समाजः समूहः महोदन्वति महासागरे सुखं निश्शङ्कं यथा स्यात्तथा विचरतु विहरतु । उपमालङ्कारः ॥ शिखरिणीवृत्तम् 'रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति लक्षणात् ॥ १०३ ॥

स्रस्तानापादलम्बान् घनतिमिरनिभान् केशपाशान् वहन्त्यः
सिन्दूरेणेव दिग्धैः प्रथमरविकरस्पर्शताम्रैः कपोलैः ।
आयासेनालसाङ्ग्योऽप्यवगणितरुजः कानने चन्दनानाम्
अस्मिन् गायन्तु रागादुरगयुवतयः कीर्त्तिमेतां तवैव ॥ १०४ ॥

नागानां जीवनान्नागीनामपि हर्षं वर्णयति ' स्रस्तानिति ' स्रस्तान् स्खलितान् आपादलम्बान् चरणपर्यन्तपतितान् घनतिमिरनिभान् गाढान्धकारसदृशान् कृष्णवर्णत्वात् केशपाशान् ग्रन्थितकेशान् वहन्त्यः धारयन्त्यः, प्रथमा प्रात

कालीना ये रविकराः सूर्यकिरणाः तेषा स्पर्शेन ताम्रैः लोहितवर्णैः अतएव सिन्दूरेण रक्तचूर्णकेण ' सिन्दूरं रक्तचूर्णके इति मेदिनी ' दिग्धैः लिप्तैरिव कपोलैः गण्डैः उपलक्षिता, आयासेन श्रमेण अलसाग्र्यः खिन्नाङ्ग्योऽपि अवगणितरुजः अचिन्तितपीडा हर्षातिरेकादिति भाव, एतादृश्यः उरगयुवतयः नागवधूट्यः अस्मिन् चन्दनाना कानने वने रागात् प्रेम्णा एता तव जीमूतवाहनस्यैव ' एवशब्दोऽवधारणार्थक ' न ममेति भावः, कीर्तिं यशः गायन्तु कीर्तयन्तु । उत्प्रेक्षालंकारः । स्रग्धरावृत्तम् ॥ १०४ ॥

नायकः । साधु महासत्व ! साधु अनुमोदामहे सर्वथा दृढसमाधानो भव । [ शङ्खचूडं निर्दिश्य ] शंखचूड ! त्वयापि स्वगृहमिदानीं गम्यताम् ।

अनुमोदामहे हृष्यामः । दृढसमाधानः दृढव्रतः ।

शङ्ख० । [ निश्वस्य अधोमुखस्तिष्ठति ] ।

नायकः । [ निःश्वस्य मातरं पश्यन् ] ।

उत्प्रेक्षमाणा त्वां तार्क्ष्य चञ्चुकोटिनिपातितम् ।
त्वद्दुःखदुःखिता नूनमास्ते स जननी तव ॥ १०५ ॥

' उत्प्रेक्षमाणेति ' हे शङ्खचूड ! तार्क्ष्येण गरुडेन चञ्चुकोट्या चञ्चुप्राग्भागेन निपातितं निक्षिप्तं त्वाम् उत्प्रेक्षमाणा सम्भावयन्ती सा तव जननी माता नूनं निश्चितं त्वद्दुःखेन दुःखिता पीडिता आस्ते तिष्ठति । उत्प्रेक्षालङ्कारः ॥ १०५ ॥

वृद्धा । [ सास्रम् ] धण्णा क्खु सा जणणी जा गरुडमुहपडिदस्स अक्खदसरीरस्स एव्व पुत्तअस्स मुहं प्रेक्खिस्सदि ( क ) ।

शङ्ख० । अम्ब ! सत्यमेवैतत् । यदि कुमारः स्वस्थो भविष्यति ।

नायकः । [ वेदनां नाटयन् ] अहह ! परार्थसम्पादनरसाक्षेपादेतावती वेला मया न लक्षिता । सम्प्रति तु मां बाधितुमारब्धा मर्मच्छेदिन्यो वेदनाः । [ मरणावस्थां नाटयति ] ।

वेदना पीडाम् । ' परार्थेति ' परार्थसम्पादने परोपकारान् कर्तुम् आनन्दरतस्य आक्षेपात् अतिशयात् । एतावती वेला एतावान् कालः

जीमू० । [ ससम्भ्रमम् ] हा वत्स ! किमेवं करोषि

वृद्धा । हा किं णु क्खु एव्वं वदादे । [ सोरस्ताडम् ] परित्ता-

---

( क ) धन्या खलु सा जननी या गरुडमुखपतितस्याक्षतशरीरस्यैव पुत्रकस्य मुखं प्रेक्षिष्यते ।

अह परित्ताअह । एसो क्खु मे पुत्तओ विवज्जइ । ( क ) ।

सोरस्ताडम् सवक्षःस्थलताडनम् । विपद्यते म्रियते ।

मल० । हा अज्जउत्त ! परिच्चइदुकामो विअ लक्खीअसि । [ख]

नायकः । [ अञ्जलिं कर्त्तुमिच्छन् ] शंखचूड ! समानय मे हस्तौ ।

समानय योजय ।

शङ्ख० । [ तथा कुर्वन् ] कष्टमनाथीकृतं जगत् ।

नायकः । [ अर्द्धोन्मीलितचक्षुः पितरं पश्यन् ] तात ! अम्ब ! अयं मे पश्चिमः प्रणामः ।

गात्राण्यमूनि न वहन्ति सचेतनत्वं
श्रोत्रं स्फुटाक्षरपदां न गिरं शृणोति ।
कष्टं निमीलितमिदं सहसैव चक्षुः
हा तात ! यान्ति विवशस्य ममासवोऽमी ॥१०६॥

'गात्राणीति' अमूनि गात्राणि अंगानि सचेतनत्वं सचेतनतां न वहन्ति धारयन्ति, श्रोत्रं श्रवणं स्फुटाक्षरपदां स्फुटानि स्पष्टानि अक्षराणि वर्णाः पदानि सुप्तिङन्तानि च यस्या तादृशीं गिरं वाणीं न शृणोति, इदं चक्षु नयनं सहसा युगपदेव निमीलितम् । हा तात ! हापितः ! कष्टम् ! विवशस्य पराधीनस्य मम अमी असवः प्राणाः यान्ति निर्गच्छन्ति । अत्र गात्रादीनामचेतनत्वादौ निष्क्रमणस्य हेतुत्वाभिधानात्काव्यलिंगालंकारः । वसन्ततिलकं वृत्तम् ॥ १०६ ॥

अथवा । संरक्षता पन्नगम् । [ इत्यादि पठित्वा पतति ] ।

वृद्धा । हा पुत्त ! हा वच्छ ! हा गुरुअणवच्छल ! कहिंसि । देहि मे पडिवअणं । ( ग )

जीमू० । हा वत्स ! जीमूतवाहन ! हा प्रणयिजनवल्लभ ! हा सर्वगुणनिधे ! क्वासि देहि मे प्रतिवचनम् । हस्तमुत्क्षिप्य ] कष्टं भोः कष्टम् ।

निराधारं धैर्य्यं कमिव शरणं यातु विनयः
क्षमः क्षान्तिं वोढुं क इह विरता दानपरता ।
हतं सत्यं सत्यं व्रजतु च कृपा क्वाद्य कृपणा
जगज्जातं शून्यं त्वयि तनय ! लोकान्तरगते ॥ १०७ ॥

---

( क ) हा ! किं नु खल्वेवं वदति । परित्रायध्व परित्रायध्वम् । एष खलु मे पुत्रको विपद्यते ।

( ख ) हा अर्य्यपुत्र ! परित्यक्तुकाम इव लक्ष्यसे ।

( ग ) हा पुत्र ! हा वत्स ! हा वत्स ! हा गुरुजनवत्सल ! क्वासि । देहि मे प्रतिवचनम् ।

विलापं कुर्वन्नाह 'निराधारमिति' हे तनय ! पुत्र ! त्वयि लोकान्तर्गते सति धैर्यं धीरता निराधारं निराश्रयम् । त्वां विना जगति धैर्यस्य आश्रय एव नास्तीत्यर्थः । विनयः नम्रता कमिव शरणं रक्षकं 'शरणं गृहरक्षित्रो' रित्यमरः । यातु प्राप्नोतु । न कमपीत्यर्थ. । क्षान्तिं क्षमा वोढुं धारितुम् इह जगति कः क्षमः समर्थ. ? न कोऽपीति । भाव. । दानपरता दानरतिः विरता निवृत्ता । सत्यम् ऋतं तु सत्यमेव हतं विनष्टम् । अद्य कृपणा दीना निराश्रयत्वात् । कृपा दया च क्व कुत्र व्रजतु गच्छतु । किं वहुना जगत् शून्यं त्वां विना रिक्तं जातम् ॥ अत्र जीमूतवाहनस्य लोकान्तर्गमनरूपेण कारणेन धैर्यादीना निराधारत्वादीनां कार्याणां समर्थनात्कारणेन कार्यसमर्थनरूपोऽर्थान्तरन्यासोऽलंकारः ॥ शिखरिणीवृत्तम् ॥ १०७

मल० । हा अज्जउत्त ! कहं परिच्चइअ गदोसि अदिणिग्घिणे मलअवदि ! किं तुए पेक्खिदव्वं ? जा एत्तिअं वेलं जीविआसि । ( क )

शङ्ख० । हा कुमार ! कैमं प्राणेभ्योऽपि वल्लभं जनं परित्यज्य गम्यते । तदवश्यमन्वेति त्वां शंखचूड ।

अन्वेति अनुगच्छति ।

गरुडः । कष्टमुपरतोऽयं महात्मा । तत् किमिदानीं करोमि ।

उपरत मृत: ।

वृद्धा । [ सास्रमूर्ध्वमवलोक्य ] भअवन्त लोअपाला ! कहंपि अमिदेण सिञ्चिअ पुत्तअं मे जीआवेहि । ( ख )

गरुडः । [ सहर्षमात्मगतम् ] अये ! अमृतसङ्कीर्त्तनात् साधु स्मृतम् । मन्ये प्रनष्टमयश । तद् यावत् त्रिदशपतिमभ्यर्थ्य तद्विसृष्टेनामृतवर्षेण न केवलं जीमूतवाहनमेतानपि पूर्वभक्षितानस्थिशेषानुरगपतीन् प्रत्युज्जीवयामि । यदि न ददात्यसौ तदाहम् ।

त्रिदशपतिं देवपतिम् इन्द्रमित्यर्थ. । अभ्यर्थ्य प्रार्थ्य । तद्विसृष्टेन तन्मोचितेन ।

पक्षैः पीताम्बुनाथं पटुतरजवनैः प्रेर्यमाणः समीरैः
नेत्राग्निप्लोषमूर्च्छाविधुरविनिपतत्सानलद्वादशार्कः ।
चञ्च्वा सञ्चूर्ण्य शक्राशनिघनदगदाप्रेतलोकेशदण्डान्
आजौ निर्जित्य देवान् क्षणममृतमयं वर्षमभ्युत्सृजामि १०८

'पक्षैरिति'

खण्डान्वयः—

अहं एणं वर्षमभ्युत्सृजामि, कीदृशोऽहम् ? पक्षैः प्रेर्यमाण· कीदृशैः पक्षैः ?

---

( क ) आर्यपुत्र ! कथ परित्यज्य गतोऽसि । अतिनिर्घृणे मलयवति ! किं त्वया प्रेक्षितव्यम् · या एतावद्वेलं जीवितासि ।

( ख ) भगवन्तो हे लोकपाला ! कथमप्यमृतेन सिक्त्वा पुत्रकं मे जवय ।

पटुतरजवनैः, पुनः कीदृशैः पक्षैः ? समीरैः, पुनः कीदृशोऽहम् ? नेत्राग्निप्लोषमूर्च्छा-विधुरविनिपतत्सानलद्वादशार्कः, कीदृशं वर्षम् ? अमृतमयम् किं कृत्वा ? अम्बुनाथं पीत्वा, पुनः किं कृत्वा ? चञ्च्वा शक्राशनिधनदगदाप्रेतलोकेशदण्डान् सञ्चूर्ण्य, पुनः किं कृत्वा ? देवान् आजौ निर्जित्य।

व्याख्या—

यदा देवराजः स्वयमेवामृतं न ददाति तदाहं किं करिष्यामि तदाह "पक्षैरिति" पटुतरजवनैः पटुतराः शक्ततरा जवनाः त्वरिताश्च तादृशैः समीरैः वातरूपैः पक्षैः प्रेर्यमाणाः धार्यमाणाः 'नेत्रेति' नेत्राग्निना यः प्लोषो दाहः तेन या मूर्च्छा मोहः तया विधुरा विह्वला अतएव विनिपतन्तः प्रस्खलन्तः सानलाः साग्निका द्वादश अर्काः सूर्या येन तादृशोऽहम् अम्बुनाथं जलनिधिं पीत्वा, चञ्च्वा शक्रस्य महेन्द्रस्य अशनिं वज्रं धनदस्य कुवेरस्य गदा प्रेतलोकेशस्य धर्मराजस्य दण्डं च सञ्चूर्ण्य-भङ्क्त्वा, देवान् आजौ सङ्ग्रामे निर्जित्य पराजित्य क्षणम् अमृतमयं सुधारूपं वर्षवृष्टिम् अभ्युत्सृजामि अभिवर्षयामि एकस्य कर्त्तृकारकस्यानेकासां क्रियाणां च सम्भवात्कारकदीपकालंकारः ॥ स्रग्धरावृतम् ॥ १०८ ॥

तदयं गतोऽस्मि। [ इति साटोपं प्रतिक्रम्य निष्क्रान्तः ]

साटोपं सक्रोधम्।

जीमू०। वत्स शङ्खचूड़। किमद्यापि स्थीयते। समाहृत्य दारुणिपुत्रस्य मे विरचय चिताम्। येन वयमप्यनेन सहैव गच्छामः।

वृद्धा०। पुत्त शंखचूड ! लहुं सज्जेहि। दुक्खं अह्मेहिं विणा भाउणो दे चिट्ठदि। [ क ]

शंख०। [ सास्रम् ] यदाज्ञापयन्ति गुरवः। नन्वग्रग एवाहं युष्माकम्! [ उत्थाय चितारचनां कृत्वा ] तात! अम्ब! सज्जीकृतेयं चिता।

जीमू०। देवि! किमपरं स्थीयते? तदुत्तिष्ठ चितायामारोहामः।
[ सर्व्वे उत्तिष्ठन्ति ]।

मल०। [ वद्धाञ्जलिरूर्ध्वं पश्यन्ती ] भअवदि गोरि ! तुए आणत्तं। जहा विज्जाहरचक्कवट्टी भत्ता ते भविस्सदिति। ता कहं मम मन्दभाआएकिदे तुमं अलिअवअणा संवुत्ता। ( क )

अलीकवचना असत्यवादिनी।

---

( क ) पुत्र शङ्खचूड ! लघु सज्जय। दुःखमस्माभिर्विना भ्राता ते तिष्ठति।

( क ) भगवति गौरि ! त्वया आज्ञतम्। विद्याधरचक्रवर्त्ती भर्त्ता ते भविष्यतीति। तत् कथं मम मन्दभाग्यायाः कृते त्वमलीकवचना संवृत्ता।

